श्रीवररुचिविरचितः

# प्राकृतप्रकाशः

श्रीवसन्तराजकृत सञ्जीवन्याख्यया टीकया

तथा

श्रीसदानन्दकृत सुबोधिन्याख्यया टीकया च

सनाथीकृतः

---

# THE PRĀKṚITA PRAKĀŚA

OF

VARARUCHI

---

With the 'Sañjīvanī' of Vasantarāja

AND

The 'Subodhinī' of Sadānanda.

---

Edited with Introduction etc.,

BY

Batuk Nath Sharma, M. A., Sāhityopādhyāya,

AND

Baladeva Upādhyāya, M. A., Sāhitya S'āstrī,

Professors, Benares Hindu University.

---

*Published under the authority of the Government of the United Provinces by the Superintendent of Government Press, Allahabad.*

# सूचीपत्रम्





# प्राकृतप्रकाशः

## पञ्चमः परिच्छेदः ।

## अथ सुब्विधिरुच्यते ।

### अत ओत् सोः ॥ १ ॥

सञ्जीवनी ।

अत इति पञ्चम्यन्तम् । अकारान्तात् प्रातिपदिकात् परस्य सुप्रत्ययस्य ओकारादेशो भवति । इंदो चंदो इन्द्रचन्द्रयोः । भत्तारो कत्तारो भर्ता कर्ता । ऋत आरः सुपीति आरादेशः। सर्वत्र ओत्वे कृते क्वचिदपि लोप इत्यलोपः । 'परस्य क्वचिदीकारात् सोराकारः प्रवर्तते' । हसन्तीआ भणन्तीआ हसन्ती भणन्ती ॥ १ ॥

सुबोधिनी ।

अकारान्तात् प्रातिपदिकादुत्तरस्य सोः प्रथमैकवचनसुप्रत्ययस्यौकारादेशः स्यात् । कण्हो कृष्णः । 'परस्य क्वचिदीकारात् सोराकारः प्रवर्त्तते' । हसन्तीआ हसन्ती । भणन्तीआ भणन्ती ॥ १ ॥

# जश्शसोर्लोपः ॥ २ ॥

सञ्जीवनी।

अत इत्यनुवर्तते इदुतो शसो णो इत्यतः प्राक्। अकारात् परयोः प्रथमाद्वितीयाबहुवचनयोर्जस्शसो र्लोपः स्यात्। देवा असुरा माणुसा। जसो लोपे कृते प्रत्ययलोपपरिभाषया जस्शस्ङस्यांसु दीर्घः इति दीर्घः। पिअरो भादरो पितरः भ्रातरः। पितृभ्रातृजामातॄणामर इति ऋकारस्य अरादेशः। देवे असुरे माणुसे। देवान् असुरान् मानुषान्। शसो लोपे कृते अत्रापि प्रत्ययलोपपरिभाषया ए सुप्यङिङसोरित्येत्वम्। पिअरे भादरे पितॄन् भ्रातॄन्।

अदन्तात् यो विधिः प्रोक्तः शेषादित्यतिदेशतः।
आदन्तादिदुदन्तात् स ईदूदन्तादपीष्यते॥

आदन्तात्–माला साला। इदुदन्तात्–अग्गी अग्नयः। वायू वायवः। जसो लोपे कृते अतः अदन्तवद्भावादेव जस्शस्ङस्यांसु दीर्घः इति दीर्घः। ईदूदन्तात्–णई बहू नद्यः वध्वः। शसि शेषाददन्तवदित्यतिदेशो नोपतिष्ठते। इदुतोः शसो णो इति स्त्रियां शसं उदोतावीति वा शेषत्वात्। कथं तर्हि बाला पेच्छ माला गेण्ह। बालाः प्रेक्षस्व मालाः

गृह्णाण इत्यत्र शसो लोपः ? 'आकारान्ताच्छसो लोपो बुधैः क्वचन्न चेष्यते' इति तत्रैवेष्यते ॥ २ ॥

सुबोधिनी ।

अकारात् परयोर्जश्शसोर्लोपः स्यात् । देवा देवाः । देवे देवान् ।

अदन्ताद्यो विधिः प्रोक्तः शेषादित्यतिदेशतः ।
आदन्तादिदुन्तात् स ईदूदन्तादपीष्यते ॥

साला शालाः । अग्गी अग्नयः । वायू वायवः । णई नद्यः । वहू वध्वः । शेषाददन्तवदित्यतिदेशः शसं प्रति नोपतिष्ठते ॥२॥

# अतोऽमः ॥ ३ ॥

सञ्जीवनी ।

लोप इत्यनुवर्तते । अकारान्तात् परस्य द्वितीयैकवचनस्य अमोऽकारस्य लोपो भवति । गामं गओ ग्रामं गतः । णामं गेण्हइ नाम गृह्णाति । नामञ्छन्दे अन्त्यस्य हल इति नलोपः । न च क्वचिदपि लोप इति अकारस्य लोपे कृते प्रयोगाणां सिद्धत्वात् किमर्थमिदं सूत्रमुच्यते ? शेषादन्तवदित्येतदर्थम् । असति सूत्रे च परस्मिन्नमि सति केन कस्य लोपः स्यात् । अदन्तात् यो विधिरित्यादि । हेलं लीलं हेलां लीलाम् । अमि ह्रस्व इति ह्रस्वः । अग्गिं वाउं अग्निम्

वायुम्। णइं वहुं नदीं वधूम्। अमि ह्रस्वः इति ह्रस्वः। सर्वत्रामोऽकारस्य लोपे कृते मो विन्दुरिति विन्दुः॥ ३॥

सुबोधनी।

अकारात् परस्यामो योऽकारस्तस्य लोपः स्यात्। गामं ग्रामम्। लीलं लीलाम्। अदन्ताद्योविधिरित्यादिना अग्गिं वाउं णइं वहुं अग्निं वायुं नदीं वधूम्॥ ३॥

# टामोर्णः॥ ४॥

सञ्जीवनी।

कार्यिणा हन्यते कार्यी कार्यं कार्येण बाध्यते।
निमित्तं च निमित्तेन शेषं तदनुवर्तते॥

इति परिभाषया अत इति पञ्चम्यन्तमनुवर्तते। अकारात् परयोः तृतीयैकवचनषष्ठीवहुवचनयोः टा आम् इत्येतयोर्णकारादेशः स्यात्। धम्मेण जम्मेण धर्मेण जन्मना। न्मो म इति मः। तस्य शेषादेशादिना द्वित्वम्। अन्त्यस्य हल इति नलोपः। कत्तारेण कर्त्रा। आरः सुपीति आरादेशः। सर्वत्र टाप्रत्ययस्य णादेशे कृते ए सुप्याङ्ङिसोरित्येत्वम्।

धम्माण जम्माण धर्माणां जन्मनाम् । कत्ताराण कर्तॄणाम् । आमो णादेशे कृते जस्शस्ङस्यांसु दीर्घ इति दीर्घः । अदन्तात् यो विधिरित्यादि । अण्णाण कण्णाण अन्यासां कन्यानाम् । बुद्धीण बुद्धीनाम् । धेणूण धेनूनाम् । शेषाददन्तवदित्यदन्तवद्भावादेव जस्शसादिना दीर्घः । रमणीण कण्डूण रमणीनां कण्डूनाम् । टाप्रत्यये त्वदन्तवद्भावो भवति । टा णा इति टाङसङीनामिदादादत इति च शेषत्वात् । 'बिन्दुर्टामोर्णे इत्यादौ सन्नसन्नपि वा क्वचित्' इति वक्ष्यते । तेन धम्मेणं जम्मेणं धम्माणं जम्माणं कत्तारेणं कत्ताराणं इत्यपि । एवमादि आ परिच्छेदपरिसमासेः प्रायेण द्रष्टव्यम् ॥ ४ ॥

सुबोधनी ।

अकारान्तात् परयोष्टामोरिसेतयोः स्थाने णः स्यात् । धम्मेण धर्मेण । जम्मेण जनानाम् । शेषाददन्तवदिति कण्णाण कन्यानाम् । बुद्धीण बुद्धीनाम् । धेणूण धेनूनाम् । रमणीण रमणीनाम् ॥ ४ ॥

# भिसो हिं ॥ ५ ॥

सञ्जीवनी ।

अकारान्तात परस्य भिसः स्थाने हिमादेशःस्यात् । धम्मेहिं कम्मेहिं धर्मैः कर्मभिः । अन्त्यस्य हल इति नलोपः । ए सुप्यङिङसोरित्येत्वम् । अदन्ताद्यो विधिरिति । बालाहिं लोलाहिं बालाभिः लोलाभिः । पाणीहिं जाणूहिं पाणिभ्यां जानुभ्याम् । द्विवचनस्य बहुवचनमिति भ्यामः स्थाने भिस् । तस्य हिमादेशः । रमणीहिं तणूहिं रमणीभिः तनूभिः ॥ ५ ॥

सुबोधिनी ।

अकारात् परस्प भिसो हिमादिश्यते । धम्मेहिं धर्म्मैः । एवमादन्तानामप्यूह्यम् ॥ ५ ॥

# ङसेरादोदुहयः ॥ ६ ॥

सञ्जीवनी ।

अकारात् परस्य पञ्चम्येकवचनस्य ङसेः स्थाने आत् ओत् उ हि इत्येते आदेशा भवन्ति । तकारोऽसन्देहार्थः । गामा गओ ग्रामाद्गतः । अकारादेशे कृते क्वचिदपि लोप इत्यलोपः । गामाओ गओ । गामाउ गओ । गामाहि गओ । आदेशे जस्शसादिना ग्रामस्य दीर्घः । एवं सप्पा भअं । सप्पाओ भअं ।

सप्पाउ भअं। सप्पाहि भअं। सर्पाद् भयम्। 'ङसेरतः परस्येह हिन्तो इत्यपि दृश्यते'। सप्पाहिन्तो भाअइ। सर्पाद् बिभेति। दूराहिन्तो णाशइ दूरान्नश्यति। अदन्ताद्यो विधिरित्यादिना आतः—गंगाओ गंगाउ गंगाहि गंगाहिन्तो गङ्गायाः। इदुद्भ्यां आ न भवति। गिरीओ गिरीउ गिरीहिन्तो गिरेः। साणूओ साणूउ साणूहिन्तो सानोः। शेषाददन्तवत् इति अदन्तवद्भावात् वा। जस्‌शस्‌ङस्यांसु दीर्घ इति दीर्घः। 'ङसेर्यदाऽऽहिरादेशो नादन्तवत्तो विधिः' इति न आहिरादेशो। ईदूद्भ्यां—तरुणीओ तरुणीउ तरुणीहिन्तो तरुण्याः। वहूओ वहूउ वहूहिंतो वध्वाः। अकारान्तादन्यत्र न ङिङसोरिदेतावित्ति ङसेराकारादेशनिषेधात् गंगाओ इत्यादिषु अपादानव्यक्तये गत इत्यादि वाच्यम्॥ ७॥

सुबोधिनी।

अकारात् परस्य ङसेः स्थाने आ ओ उ हि इति चत्वार आदिश्यन्ते। गामा गामाओ गामाउ गामाहि ग्रामात्। 'ङसेरतः परस्येह हिन्तो इत्यपि दृश्यते'। गामाहिन्तो। एवमादन्तानामप्यूह्यम्॥ ६॥

## भ्यसो हिन्तोसुन्तो॥ ७॥

सञ्जीवनी ।

अकारात् पञ्चमीबहुवचनस्य भ्यसः स्थाने हिन्तो सुन्तो इत्यादेशौ स्याताम् । अविशेषणापादानात् चतुर्थीबहुवचनस्यापि भ्यसो न ग्रहणं चतुर्थ्याः षष्ठीविधानात् । पंचाहिंतो पंचासुन्तो पञ्चभ्यः । सत्ताहिन्तो सत्तासुन्तो सप्तभ्यः । ए भ्यसीति एत्वप्रतिषेधे जस्‌शस्‌ङस्यांसु दीर्घ इत्यत्र ङसेः पञ्चम्युपलक्षणत्वात् अन्यत्रापि दीर्घः । अदन्तात् यो विधिरित्यादि । आलः-रामाहिंतो रामासुंतो रामाभ्यः । इदुद्भ्यां-अच्छीहिंतो अच्छीसुंतो अक्षिभ्यः । ऊरूहिंतो ऊरूसुंतो ऊरुभ्याम् । द्विवचनस्य बहुवचनमिति भ्यामः स्थाने भ्यस् । तस्य हिंतो सुन्तो आदेशौ । इदूद्भ्यां-जणणीहिंतो जणणीसुंतो जननीभ्यः । चमूहिंतो चमूसुंतो चमूभ्यः ॥ ७ ॥

सुबोधिनी ।

अकारात् परस्य भ्यसो स्थाने हिन्तो सुन्तो इत्येतौ स्तः । अर्थात् पञ्चमीबहुवचनस्य । चतुर्थ्याः षष्ठीविधानात् । पञ्चाहिन्तो पञ्चासुन्तो पञ्चभ्यः । एवमादाद्यन्तानामप्यूह्यम् ॥ ७ ॥

## स्सो ङसः ॥ ८ ॥

सञ्जीवनी ।

अकारान्तात् परस्य ङसः स्थाने द्वित्वापन्नः स्स इत्यादेशः स्यात् । णरस्स वाणरस्स नरस्य वानरस्य । तेअस्स तमस्स तेजसः तमसः । अन्त्यस्य हल इति सलोपः । अदन्ताद्यो विधिरित्यादिना इदुद्भ्यां-मउलिस्स मौलेः । हणुस्स हनोः । स्त्रियां ङसि परेऽदन्त-वद्भावो न भवति । टाङस्ङीनामिदेदात इत्यादेशात् । उत्तरत्र च ॥ ८ ॥

सुबोधिनी ।

अकारात् परस्य ङसः स्स इत्यादिश्यते । णरस्स नरस्य । एवमिदुदन्तयोरप्यूह्यम् ॥ ८ ॥

# ङेरेम्मी ॥ ९ ॥

सञ्जीवनी ।

अकारात् परस्य सप्तम्येकवचनस्य ङि इत्यस्य स्थाने ए म्मि इत्येतौ आदेशौ भवतः । सरे सरम्मि शरे । चम्मे चम्मम्मि चर्म्मणि । अदन्ताद्यो विधिरित्यादि । गिरिम्मि तरुम्मि गिरौ तरौ । एकारादेशस्तु न भवति न ङिङस्योरिदेताविति निषेधात् ॥ ९ ॥

सुबोधिनी ।

अकारात् परस्य ङि इत्येतस्य ए म्मि इत्येतौ स्तः । सरे सरम्मि । एवमिदुदन्तयोः म्मिरादेश ऊह्यः ॥ ९ ॥

# सुपः सुः ॥ १० ॥

सञ्जीवनी ।

अकारात परस्य सप्तमीबहुवचनस्य सुपः सुरादेशः स्यात् । सरेसु कमलेसु सरःसु कमलेषु । ए च सुप्यङिङसोः इति एत्वम् । ङसः स्सविधानं यथा सुपः सुविधानं तथा प्रयोजनवदित्याहुः ॥ १० ॥

सुबोधिनी ।

अकारात् परस्य सुपः सु इति स्यात् । कमलेसु कमलेषु । सुपः सुविधानं न प्रयोजनवादित्याहुः ॥ १० ॥

# जस्ङस्यांसु दीर्घः ॥ ११ ॥

सञ्जीवनी ।

अत इति षष्ठ्यन्तमनुवर्तते । अर्थवशात् विभक्तिविपरिणाम इति वचनात् । क्वचिदपि लोप इति यावत् । प्रथमाबहुवचनं जस्, पञ्चम्येकवचनं ङसि,

षष्ठीबहुवचनं आम् । एषु परेषु अकारान्तस्य दीर्घो भवति । जसि—देवा माणुसा देवाः मानुषाः । 'सर्वविधिभ्यो लोपविधिर्बलवान्' इति जसो लोपे कृते 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति वचनात् अनेन दीर्घः । ङसौ—देवाहि माणुसाहि देवाओ माणुसाओ देवात् मानुषात् । आदेशस्य स्थानिवद्भावात् अनेन दीर्घः । 'सर्वादिष्विदमो दीर्घो न त्वन्येषां ङसौ भवेत्' । इमाओ इमाहि अस्मात् । इदम इम इति इमादेशः । इदमः इति किम्? सव्वत्तो सव्वदो सर्वस्मात् । तओ तत्तो तदो तस्मात् ततो वा । ङसेरत्तोदोङ्सेरानिदमः इति ओ त्तो दो इति त्रय आदेशाः । आमि—देवाण माणुसाण । टामोर्णः इति आमो णः । देवानां मानुषाणाम् । अदन्ताद्यो विधिरित्यादि गिरी तरू गिरयः तरवः । स्त्रियामपि—बुद्धी धेणू बुद्धयः धेनवः । ङसौ—गिरीओ तरूओ बुद्धीओ धेणूओ । गिरेः तरोः बुद्धेः धेनोः । शेषादद-न्तवदित्यतिदेशादनेन दीर्घः । आमि—गिरीण तरूण गिरीणां तरूणाम् । बुद्धीण धेणूण बुद्धीनां धेनूनाम् । अत्रापि अदन्तवद्भावादेव टामोर्णः इत्यामो णः । दीर्घश्च । 'शसुटाङसिषु दीर्घत्वं वक्तव्यमिदुतोः स्त्रियाम्' । शसि—बुद्धीओ पेच्छ । धेणूओ पेच्छ । बुद्धीः

प्रेक्षस्व । धेनूः प्रेक्षस्व । स्त्रियां शस उदोतौ इति ओत्वम् । टाङस्ङीनामिदेदात इति टाङस्ङिषु । बुद्धीए बुद्ध्या बुद्धेः बुद्धौ वा । धेणूए धेन्वा धेन्वाः धेनौ वा । तिसृणां विभक्तीनामेकारादेशः । एषां तुल्येऽपि रूपे अर्थतो विशेषः ॥ ११ ॥

सुबोधिनी ।

अत इति षष्ठ्यन्तमनुवर्त्तते । अर्थवशाद्विभक्तिपरिणाम इति वचनात् । जस् ङसि आम् इत्येषु परेषु अकारस्य दीर्घत्वं स्यात् । देवा देवाः । माणुसाहि मानुषात् । रक्खसाणं राक्षसानाम् । 'सर्वादिष्विदमो दीर्घो न त्वन्येषां ङसौ भवेत्' । इमाओ अस्मात् । सव्वाओ सर्वस्मात् । अन्यदप्येवमूह्यम् । एत्रमादन्तानामप्यूह्यम् । परन्तु 'शस्टाङसिषु दीर्घत्वं वक्तव्यमिदुतोः स्त्रियाम्' । बुद्धीओ बुद्धीः । धेणूओ धेनूः । बुद्धीए धेणूए बुद्ध्या बुद्धेः बुद्धौ वा । धेन्वा धेनोः धेनौ वा ॥ ११ ॥

## ए सुप्यङिङसोः ॥ १२ ॥

सञ्जीवनी ।

सुपीति प्रत्याहारः । तेन सुप्रत्ययादौ विभक्तिगणे परे एकारः स्यात् सप्तम्येकवचनं ङि षष्ठ्येकवचनं ङस् एतौ वर्जयित्वा । जणे पेच्छ जनान् पश्य ।

जश्शसोर्लोप इति शसो लोपः। जलेण घणेण जलेन घनेन। जलेहिं घणेहिं जलैः घनैः। जलेसु घणेसु अङिङसोरिति किम्? जलम्मि घणम्मि जले घने। ङेर्म्मीति म्मिरादेशः। जलस्य घणस्स जलस्य घनस्य। 'ए सुप्यङिङसोः सूत्रे नेष्टं शेषाददन्तवत्' इति अदन्त वद्भावादन्यत्र एकारादेशो न भवति। रामाओ सामाओ रामाः श्यामाः। सहीओ वहूओ सखीः वधूः। स्त्रियां उदोताविति ओत्वम्। सालिणो पीलुणो सालीन् पीलून्। इदुतोः शसो णो इति णो आदेशः। एवमन्येऽपि जसि दीर्घः। 'जसि दीर्घः शसि त्वेत्वं षणान्तां संख्यां विना भवेत्'। छ षट्। षडादिना छः। पंच पञ्चैव। सत्त सप्त। छ पेच्छ षट् प्रेक्षस्व। पंच पेच्छ पञ्च प्रेक्षस्व। सत्त पेच्छ सप्त प्रेक्षस्व॥ १२॥

## सुबोधिनी।

ङिङसोर्वर्जयित्वाऽन्यस्मिन् सुपि परे अकारस्य एत्वं स्यात्। जणे जनान्। जणेण जनेन। जणेहिं जनैः। जणेसु जनेषु। अङिङसोरिति किम्? जणम्मि जणस्स। 'जसि दीर्घः शसि त्वेत्वं षणान्तां संख्यां विना भवेत्'। छ पञ्च षट पञ्च इति जसि। छ पञ्च इति शसि॥ १२॥

# क्वचिदपि लोपः ॥ १३ ॥

सञ्जीवनी ।

अचीत्यध्याह्रियते । सुपीति च । अजादौ सुपि परे अकारस्य लोपो भवति । क्वचिदिति असकलविधिद्योतनार्थम् । जम्मो जन्म । तमो तमः । पाउसो दिसो प्रावृट् दिक् । दिक्प्रावृषोः स इति सः । सरओ शरत् । शरदोऽदिति तस्य अत्वम् । नसन्तप्रावृट्शरदः पुंसीति पुंस्त्वम् । अत ओत् सोरित्योत्वम् । चंदओ चन्द्रकः चन्द्र एव । स्वार्थे को वेति कः । सप्पा अहिअं पिसुणा बीहेइ । सर्पादधिकं पिशुनाद् बिभेति । ङसेरादोदुहय इति आकारादेशः । णहे पक्खिणो नभसि पक्षिणः । अन्त्यस्य हल इति सलोपः । दहे मच्छा ह्रदे मत्स्याः । दाढादयो बहुलमिति ह्रदयो परिवृत्तिः । द्रे रो वेति रलोपः । ङेरम्मी इति एकारादेशः। क्वचिदिति किम्? सप्पाओ सप्पाउ । पिसुणाओ पिसुणाउ । सर्पात् पिशुनात् । जस्ङस्यांसु दीर्घ इति दीर्घः । 'अकारलोपसूत्रेऽपि नेष्टं शेषाददन्तवत्' इति अदन्तवद्भावादन्यत्र लोपो न भवति । बाला बालाः । बुद्धीओ धेणूओ बुद्धयः धेनवः । शेषादन्तवद्भावात् जस्ङस्यादिना दीर्घः ।

सहीओ बहूओ सख्यः वध्वः । सर्वत्र जसो वेति जस ओत्वमित्यादि ॥ १३ ॥

सुबोधिनी ।

अचीत्यध्याहियते । अजादौ सुपि परेऽकारस्य लोपः स्यात् । जम्मो जन्म । सप्पा सर्पात् । क्वचिदिति किम् ? सप्पाउ सप्पाओ ॥ १३ ॥

# इदुतो शसो णो ॥ १४ ॥

सञ्जीवनी ।

इदुतोः षष्ठी पञ्चम्याः स्थानमित्याहुः । येन विधिस्तदन्तस्येति वचनात् इकारोकाराभ्यां इकारान्तोकारान्तशब्दौ गृह्येते । इकारान्तात् उकारान्ताच्च प्रातिपदिकात् परस्य शस्प्रत्ययस्य णो इत्यादेशो भवति । सहिणो साराहिणो सखीन् सारथीन् । खथयोर्हत्वम् । बाहुणो बाहून् । स्त्रीनपुंसकयो र्विशेषस्य वक्ष्यमाणत्वात् पुंस्येवायं विधिः । 'इदुद्भ्यामुत्तरस्येष्टो वा णो इति ङसेरपि' । जलहिणो पुव्वो । मेरुणा उत्तरो । जलधेः पूर्वः ।

मेरोरुत्तरः । पक्षे ङसेरादोदुहयः । जलहीओ मेरूओ जलधेः मेरोरित्यादयः ॥ १४ ॥

सुबोधिनी ।

इकारान्तत् उकारान्ताच्च प्रतिपदिकात् परस्य शसूप्रत्ययस्य णो इत्यादेशो भवति । बाहुणो बाहून् । 'इदुदूभ्यामुत्तरस्येष्टो वा णो इति ङसेरपि'। जलहिणो जलहीओ जलधेः। मेरुणो मेरूओ मेरोः ॥ १४ ॥

# ङसो वा ॥ १५ ॥

सञ्जीवनी ।

इदुतो इत्यनुवर्तते स्त्रियां शस उदोतौ इत्यतः प्राक् । णो इत्यनुवर्तते उत्तरत्र च । इकारोकारान्ताभ्यां परस्य ङसो णो इत्यादेशो वा भवति। असिणो रासिणो असेः राशेः । इन्दुणो विन्दुणो इन्दोः विन्दोः । पत्ते अदन्तवत् स्स आदेशः ॥ १५ ॥

सुबोधिनी ।

इदुभ्यामुत्तरस्य ङसो णो इति वा स्यात् । हरिणो हरिस्स हरेः । इंदुणो इंदुस्स इन्दोः ॥ १५ ॥

## *जस ओ वो वाऽत्वं च ॥ १६ ॥

सुबोधिनी ।

इदुद्भ्यामुत्तरस्य जस ओत्वं वोत्वं च स्यादत्वं च पूर्वस्य । एकयोगनिर्दिष्टानामित्यादित ओत्वादिपक्ष एव इदुतोरत्वम् । रासओ रासिवो रासिणो रासी राशयः । वेणओ वेणुवो वेणुणो वेणू वेणवः । अत्रादन्तत्वाऽभावाद्दीर्घत्वं न स्यात् । अत्व-स्यैव विधानात् । क्वचिदित्यनुवृत्तेश्चेति ॥ १६ ॥

## *टा णा ॥ १७ ॥

सुबोधिनी ।

इदुद्भ्यामुत्तरस्य टा इत्यस्य णा स्यात् । दहिणा दध्ना वाउणा वायुना ॥ १७ ॥

## सुभिस्सुप्सु दीर्घः ॥ १८ ॥

सञ्जीवनी ।

एषु त्रिषु परेषु इदुतोर्दीर्घो भवति । सौ तावत्-पंत्ती पङ्क्तिः । तंतू तन्तुः । भिसि-पंतीहिं तंतूहिं । पङ्क्तिभिः तन्तुभिः । सुपि-पंतीसु पंक्तिषु । तंतूसु तन्तुषु । 'क्वचिदित्यनुवृत्तेः स्यान्न

---

* सूत्रस्यास्य सञ्जीवनी नोपलभ्यते ।

क्वचित् सुपि दीर्घता'। भूमिसु भूमिषु इत्यादौ ॥ १८ ॥

सुबोधिनी ।

सु भिस् सुप इत्येतेषु परेषु इदुतोर्दीर्घः स्यात् । पंती पङ्क्तिः । तणू तनुः । पंतीहि पंक्तिभिः । तणूहिं तनुभिः । पंतीसु पङ्क्तिषु । तणूसु तनुषु । भूमिसु भूमिषु इत्यादौ क्वचिदित्यनुवृत्तेः दीर्घत्वं न । इदुद्भ्यामिति निवृत्तम् ॥ १८ ॥

# स्त्रियां शस उदोतौ ॥ १९ ॥

सञ्जीवनी ।

इदुतोरिति निवृत्तम् । स्त्रीलिङ्गे वर्तमानात् प्रातिपदिकात् परस्य शस उत ओत् इत्यादेशौ भवतः । तकारोऽसन्देहार्थः । आसाउ आसाओ आशाः । दिसाउ दिसाओ दिशः । दिक्प्रावृषोः स इति सः । आदीतौ बहुलमिति आप्रत्ययः । 'अकारान्तवदादन्तात् शसो लोपाय चेष्यते' । इति पक्षे शसो लोपः । आसा दिसा । जुवईउ जुवईओ युवतीः । विज्जूउ विज्जूओ विद्युतः । अन्त्यस्य हल इति तलोपः । त्यथ्यद्यां चछजा इति द्यस्य जः । जस्शस्ङस्यांसु दीर्घ इति दीर्घत्वे वक्तव्ये उतो स्त्रियामिति दीर्घः । माणिणीउ माणिणीओ मानिनीः । करहोरूउ करहोरूओ करभोरूः ॥ १९ ॥

सुबोधिनी ।

स्त्रीलिङ्गे वर्त्तमानात् प्रातिपदिकादुत्तरस्य जस उत्वमोत्वं च स्याताम् । रामाउ रामाओ रामाः । एवमीदन्तानामप्यूह्यम् ॥ १९ ॥

## * जसो वा ॥ २० ॥

सञ्जीवनी ।

स्त्रियामित्यनुवर्त्तते नपुंसके सोर्बिन्दुरिति यावत् । उदोतावित्यनुवर्त्तते । स्त्रीलिङ्गे वर्त्तमानात् प्रातिपदिकात् परस्य जस इत्येतस्य उ ओ इत्येतौ आदेशौ वा भवतः । रेहाउ रेहाओ रेखाः । सिप्पीउ सिप्पीओ शुक्तयः । शुक्तिशब्दस्य दाढादयो बहुलमिति सिप्पि आदेशः । सिणाउ सिणाओ स्नायवः । 'प्लोषे प्लुष्टे भवेत् स्नायौ श्लोके विश्लेष इत्यथा' इति सकारनकारयोर्विकर्षः । पूर्वस्य च इत्वम् । देईउ देईओ देव्यः । सासुउ सासुओ श्वश्र्वः । आ समृद्ध्यादिषु वेति आत्वम् । सर्वत्र वाग्रहणात् पक्षे शेषादन्तवत् इति अदन्तवद्भावात् जश्शसोर्लोप इति जसो लोपः । दिसा सोभा दिवीत्यादि ॥ २० ॥

---

* एतत्सूत्रादारभ्य 'नातोऽदातौ' इति सूत्रं यावत् सुबोधिनी नोपलभ्यते ।

# अमि ह्रस्वः ॥२१॥

सञ्जीवनी।

ह्रस्व इति सम्बन्धिशब्दात् दीर्घं स्थानिनमाक्षिपति। तेन द्वितीयैकवचने अमि परे दीर्घस्य ह्रस्वो भवति। घरं घराम्। धारं धाराम्। लहुइं गरुइं लघ्वीं गुर्वीम्। उः पद्मतन्वीसमेषु इति घकारवकारयोः रकारवकारयोश्च विकर्षः स्यात्। पूर्वस्य च उत्वम्। कदुदुं कद्रूम्। द्रे रो वेति रलोपः। शेषादेशादिना द्वित्वे कृते शेषाददन्तवत् इति अदन्तवद्भावात् अतोऽम इत्यकारलोपः। मो बिन्दुरिति बिन्दुः॥ २१॥

# टाङसूङीनामिदेदादतः ॥२२॥

सञ्जीवनी।

स्त्रीलिङ्गात् परेषां टा ङस ङि इत्येतेषां प्रत्येकं इत् एत् आत् अत् इत्येते चत्वार आदेशाः भवन्ति। तकारोऽसन्देहार्थः। बुद्धीइ बुद्धीए बुद्धीआ बुद्धीअ बुद्ध्या बुद्ध्याः बुद्धौ। धेणूइ धेणूए धेणूआ धेणूअ धेन्वा धेनोः धेनौ। टाङसूङिषु इदुतोः स्त्रियामिति दीर्घः।

ससिमुहीइ ससिमुहीए ससिमुहीआ ससिमुहीअ । शशिमुख्या शशिमुख्याः शशिमुख्याम् । करहोरूइ करहोरूए करहोरूआ करहोरूअ । करभोर्वा करभोर्वाः करभोर्वाम् । तिसृषु विभक्तिषु समं रूपम् । कर्तृकरण-सम्बन्धाधिकरणभेदेन पुनरर्थविशेषोऽवगन्तव्यः ॥२२॥

# नातोऽदातौ ॥ २३ ॥

सञ्जीवनी ।

टाङसङीनामित्यनुवर्तते । आकारान्तात् स्त्रीलिङ्गात् परेषां टा ङस ङि इत्येतेषां त्रयाणां अत् आत् इत्यादेशौ न भवतः । पूर्वेण सर्वत्र चत्वारः प्राप्ताः । इत् एत् इत्यादेशौ भवतः । गोलाइ गोलाए गोदावर्या गोदावर्याः गोदवर्याम् । दाढादयो बहुलमिति गोदावरीशब्दस्य गोला इति निपात्यते । धुराइ धुराए धुरा धुरः धुरि । रो रा इति रादेशः । अत्रापि समं रूपम । अर्थं परं विशेषः ॥ २३ ॥

# आदीतौ बहुलम् ॥ २४ ॥

सञ्जीवनी ।

स्त्रीलिङ्गे वर्तमानात प्रातिपदिकात् आ इ इत्येतौ

प्रत्येकं भवतः। काइ कीअ कया कस्याः कस्यां वा। जाइ जीइ जीआ यया यस्याः यस्यां वा । ताइ तीइ तीआ तया तस्याः तस्यां वा। इमाइ इमीअ अनया अस्याः अस्यां वा। इदम इम इति इदम इमादेशः। टाङसिङीनामिदेदादतः इति टा ङिस ङि इत्येतेषां अन्यतमस्य इकाराकारादेशौ । बहुलग्रहणात् क्वचित् विकल्पः। हलद्दा हलद्दी। सुप्पणहा सुप्पणही। उदूतो मधूकादिषु इति उत्वम्। क्वचिदाकार एव वा। असहणा कोपणा । पिआ बल्लहा । प्रिया बल्लभा। क्वचित् ईकार एव। माणिणी माणंसिणी मानिनीमनस्विन्योः। गाअणी गायनशब्दस्य । णच्चणी नर्तनशब्दस्य। च्चो व्रजिनृत्योरिति च्चो आदेशः। इत्यादयः।

आदन्तात् परमाकार ईकारो व्यञ्जनादपि।
इत्येवं व्यवतिष्ठन्ते बहुलग्रहणात् परे॥ २४॥

सुबोधिनी।

स्त्रियां वर्त्तमानात् प्रातिपदिकात् आ ई इत्येतौ प्रत्ययौ स्तः। बहुलग्रहणात् क्वचित् प्रवृत्तिरित्यादिकमभिप्रैति। काइ कीइ कया कस्याः कस्यां वा। जाइ जीअ यया यस्याः यस्यां वा। ताइ तीअ तया तस्याः तस्यां वा । इमाइ इमीआ अनया अस्याः अस्यां वा। हलद्दा हलद्दी हरिद्रा। सुप्पणहा सुप्पणही शूर्पनखा। क्वचिदाकार एव। असहणा कोवणा असहना कोपना।

पिआ प्रिया । वल्लहा वल्लभा । क्वचिदीकार एव । माणिणी मानिनी । माणंसिणी मनस्विनी । गाअणी गायनशब्दस्य स्त्रीप्रत्ययान्तः । णच्चणी नर्त्तनशब्दात् सिद्धम् ।

अदन्तात्परमाकार ईकारो व्यञ्जनादपि ।
इत्येवं व्यवतिष्ठन्ते बहुलग्रहणात् परे ॥ २४ ॥

# नपुंसके सोर्बिन्दुः ॥ २५ ॥

सञ्जीवनी ।

नपुंसकलिङ्गे वर्तमानात् प्रातिपदिकात् परस्य प्रथमैकवचनस्य सुप्रत्ययस्य बिन्दुरादेशः स्यात् । अत ओत् सोरित्योत्वं प्राप्तम् । वअणं वदनम् । रअणं रत्नम् । क्लिष्टश्लिष्टेत्यादिना तनयोर्विकर्षः । पूर्वस्य वा अदन्तत्व-त्वम् । दहिं दधि । महुं मधु । अच्छिं अक्षि । अक्ष्यादिषु छ इति छः । धणुं धनुः । अन्त्यस्य हल इति सलोपः ॥२५॥

सुबोधिनी ।

नपुंसके वर्त्तमानात् प्रातिपदिकात् परस्य सोर्बिन्दुरादेशः स्यात् । रअणं रत्नम् । दहिं दधि । महुं मधु इत्यादि ॥ २५ ॥

# इं जश्शसोर्दीर्घः ॥ २६ ॥

सञ्जीवनी ।

नपुंसक इत्यनुवर्तते उत्तरत्र च । नपुंसकलिङ्गे वर्तमानात् प्रातिपदिकात् परयोः जस्‌शसोः इं इत्यादेशो भवति पूर्वस्य च दीर्घः । जश्शसोर्लोपः इति, इदुतोः शसो णो इति, जस ओ वो वाऽत्वं च इति प्राप्तानां बाधः । पुण्णाइं पुन्यानि । रण्णाइं अरण्यानि । लोपोऽरण्ये इत्यलोपः । जाइं ताइं यानि तानि । दहीइं वारीइं दधीनि वारिणी । महूइं साहूइं मधूनि साधूनि । 'जश्शसोरिदुतोः क्वापि निकारोऽपि नपुंसके' । अच्छीणि अक्षीणि इत्यादौ ॥ २६ ॥

सुबोधिनी ।

नपुंसके जस्‌शस् इत्येतयोरिमिति स्यात् । पूर्वस्य च दीर्घः स्यात् । रण्णाइं अरण्यानि। दहीइं दधीनि । महूइं मधूनि इत्यादि २६॥

# नामन्त्रणे सावोत्वदीर्घ-बिन्दवः ॥ २७ ॥

सञ्जीवनी ।

आह्वानमामन्त्रणम् । आमन्त्रणे अर्थे सुप्रत्ययः । तस्मिन् सति ओकारादेशो दीर्घत्वं बिन्द्वादेशश्च न

भवति । अत ओत् सोरिति, सुभिस्सुप्सु दीर्घ इति, नपुंसके सोर्बिन्दुरिति क्वचित् प्राप्तानि । ओत्वं तावत्–हे देअर हे वल्लह । हे देवर हे वल्लभ । दीर्घत्वं–हे ससि हे समि हे शशिन् हे स्वामिन् । अन्त्यस्य हल इति नलोपः । अरे वडु अरे फसु अरे वटो अरे पशो । बिन्दुः–हे मिहुण हे मिथुन । हे हिअअ हे हृदय । हे अच्छि हे अक्षि हे अक्षे वा । हे दहि हे दधि हे दधे वा । हे जाणु हे जानु हे जानो वा । 'दीर्घत्वमपि मन्यन्ते क्वचिदामन्त्रणे बुधाः' । हे पहू हे प्रभो । हो पिअवअस्सा भो प्रियवयस्य । रे णिग्घणा रे निर्घृण । इत्यादि । सर्वत्र अन्त्यस्य हल इति सुलोपः ॥ २७ ॥

सुबोधिनी ।

संबोधने सुप्रत्ययस्य ये ओत्वादय आदेशास्ते न स्युः । हे वल्लह हे वल्लभ । हे हिअअ हे हृदय इत्यादि ॥ २७ ॥

# आत ए ॥ २८ ॥

सञ्जीवनी ।

स्त्रियामित्यपेक्षते । आमन्त्रणे साविति द्वयमनुवर्तते । उत्तरत्र च । आमन्त्रणेऽर्थे सौ परे स्त्रियामा-

कारस्य एकारादेशो भवति । हे बाले हे मुद्धे बाला मुग्धा इत्यनयोः। 'आकारस्य न सावेत्वं क्वचिदामन्त्रणे भवेत्'। हे माउच्छा हे मातृष्वसः । हे पिउच्छा हे पितृष्वसः । मातृष्वसृपितृष्वसृशब्दयोः दाढादयो बहुलमिति माउच्छा पिउच्छा इत्येतौ निपात्येते । हे अत्ता । श्वश्रूशब्दस्य पूर्ववत् अत्तापि निपात्यते ॥२८॥

सुबोधिनी ।

स्त्रियामित्यपेक्षते । आमन्त्रणे सौ स्त्रियामाकारस्य एत्वं स्यात् । हे बाले हे बाले । 'आकारस्य न सावेत्वं क्वचिदामन्त्रणे भवेत्' । हे माउच्छा हे पिउच्छा हे अत्ता । हे मातृष्वसः हे पितृष्वसः हे श्वश्रु ॥ २८ ॥

# ईदूतोर्ह्रस्वः ॥ २९ ॥

सञ्जीवनी ।

आमन्त्रणार्थे सौ ईकारान्तस्य ऊकारान्तस्य च ह्रस्वो भवति । हे माणिणि हे मानिनि । हे वहु । हे सासु । वधूश्वश्रू इत्येतयोः ॥ २९ ॥

सुबोधिनी ।

आमन्त्रणे सौ परे स्त्रियामीकारस्योकारस्य च ह्रस्वः स्यात् । हे माणिणि हे मानिनि । हे वहु हे वधु ॥ २९ ॥

## ऋत आरः सुपि ॥ ३० ॥

सञ्जीवनी ।

सुपिति प्रत्याहारः । तेन स्वादौ विभक्तिगणे परे ऋकारान्तस्य आर आदेशो भवति । भत्तारो भर्त्ता । आरादेशे कृते अत ओत् सोरित्योत्वम् । क्वचिदपि लोप इत्यलोपः । भत्तारं भर्त्तारम् । अतोऽम इत्यकारलोपः । मो बिन्दुरिति बिन्दुः । भत्तारेहिं भर्तृभिः । भिसो हिमिति भिसः स्थाने हिमादेशः । ए सुप्यङिङसोरित्येत्वम् । आमन्त्रणेऽपि हे भत्तार हे भर्तः । आमन्त्रणे सौ इत्यादिना अत ओत् सोरित्योत्वस्य प्रतिषेधात् । अन्त्यस्य हल इति सुलोपः । एवं कर्तृशब्दादीनामपि उदाहार्यम् ॥ ३० ॥

सुबोधिनी ।

स्वादौ परे ऋकारस्य आर इत्यादिश्यते । भत्तारो भर्त्ता ॥ ३० ॥

## मातुरा ॥ ३१ ॥

सञ्जीवनी ।

अत इत्यनुवर्तते राज्ञ इत्यतः प्राक् । सुपीत्यनु-

वर्तते । स्वादौ विभक्तिगणे मातृशब्दस्य ऋत आकारादेशः स्यात् । पूर्वेणारादेशः प्राप्तः । माआ माता । कगचादिना तलोपः । अन्त्यस्य हल इति सुलोपः । माआओ मातरः । जसो वेति जस ओत्वम् । माअं मातरम् । अमि ह्रस्व इति ह्रस्वत्वम् । अतोऽम इत्यकारलोपः । मो बिन्दुरित्यादिना बिन्दुः । माआओ मातॄः । स्त्रियां शस उदोताविति ओत्वम् । माआइ मात्रा मातुः मातरि वा । टाङसङीनामिदेदादत इति त्रयाणामन्यतमस्य इकारादेशः । माआहिं मातृभिः । भिसो हिमिति हिं । माआउ मातुः । ङसेरादोदुहय इति उः । माआहिन्तो मातृभ्यः । भ्यसो हिन्तो सुन्तो इति हिन्तो आदेशः । माआणं मातॄणाम् । अदन्तवद्भावात् टामोर्ण इति णः । माआसु मातृषु । आमन्त्रणेऽपि हे माए हे मातः । आत ए इत्याकारस्य एत्वम् । 'मातृष्वसृपितृष्वस्रोरप्यात्वं स्याद्दतः सुपि' । माउस्सिआ पिउस्सिआ । मातृष्वसा पितृष्वसा । कगचादिना तलोपः । उदृत्वादिषु इति ऋकारस्योत्वम् । शषोः स इति षस्य सः । सर्वत्र लवरामिति वलोपः । माउस्सिआओ पिउस्सिआओ मातृष्वसृपितृष्वस्रोः जस ओत्वम् । सोर्लोपे कृते दादादि-

त्वादकारस्य इत्वं निपात्यते । ततश्च इकारात् परस्य सकारस्य लोपः । माउस्सिआओ पिउस्सिआओ मातृष्वसारः पितृष्वसारः । जसो वेति जसः ओत्वम् । एवमन्यास्वपि विभक्तिषु उदाहार्यम् । 'मातृवत् स्यान्ननान्दापि ऋत आत्वविधौ सुपि' । णणान्दा ननान्दा । णणान्दाओ ननान्दरः । पूर्ववत् जस ओत्वम् । नो ण इति णः । आदिस्थस्य तु न भवति । अनादाविति कस्यचिदत्रानुवर्तनत्वात् ॥३१॥

सुबोधिनी ।

मातृशब्दसम्बन्धिनः ऋकारस्य आत्वं स्यात् । माआ माता । 'मातृष्वसृपितृष्वस्रोरप्यात्वं स्यादृतः सुपि' । माउस्सिआ पिउस्सिआ । 'मातृवत् स्यान्ननान्दाऽपि ऋत आत्वविधावपि' । णणंदा । अत्र प्रथमनकारस्य णत्वं न स्यात् ॥ ३१ ॥

# उ जस्शस्टाङस्सु वा ॥३२॥

सञ्जीवनी ।

विशेषादिष्टः प्रकृतं न बाधते । ऋत इत्यनुवर्तते तथैव अधिकाराकृष्ट आर इत्यपि । प्रथमा बहुवचनं जस्, द्वितीयाबहुवचनं शस्, तृतीयैकवचनं टा, षष्ठ्येकवचनं ङस्, एषु चतुर्षु परेषु ऋकारस्य

उ आर इत्येतावादेशौ भवतः। भत्तू भर्तारः। उकारादेशे कृते अदन्तवद्भावात् जश्शसोर्लोप इति जसो लोपः। तथैव जस्ङस्यादिना दीर्घः। पक्षे भत्तारा। अत्राऽऽरादेशे कृते मुख्या वृत्त्या जसो लोपो दीर्घत्वं च। भत्तुणो भर्तॄन्। इदुतोः शसो णो इति णो आदेशः। भत्तारे। जस्शसोर्लोप इति शसो लोपः। ए सुप्यङिङसोरित्येत्वम्। भत्तुणा भर्त्रा। टा णा इति णा आदेशः। पक्षे भत्तारेण। पक्षे टाम्ोर्णः इति टाप्रत्ययस्य णः। भत्तुणो भर्तुः। ङसो वेति णो आदेशः। पक्षे भत्तारस्स॥ ३२॥

सुबोधिनी।

विशेषादिष्टः प्रकृतं न बाधत इति ऋत इत्यनुवर्त्तते। जस् शस् टा ङस् एषु परेषु ऋत उत्वं स्याद्वा। भत्तू भत्तारो भर्त्तारः। भत्तूणो भत्तारे भर्त्तॄन्। भत्तुणा भत्तारेण भर्त्रा। भत्तुणो भत्तारस्स भर्त्तुः॥३२॥

# पितृभ्रातृजामातॄणामरः॥३३॥

संजीवनी।

विशेषादिष्टः प्रकृतं न बाधत इति सुपि इति प्रत्याहारोऽनुवर्तते। तेन पितृभ्रातृजामातृ इत्येतेषां

त्रयाणां सम्बन्धिन ऋकारस्य स्वादौ विभक्तिगणे परे अर इत्यादेशो भवति। ऋत आरः सुपीति आरा-देशः प्राप्तः। पिअरा भाअरा जामाअरा। पितरः भ्रातरः जामातरः। जस्शसो र्लोप इति जसो लोपः। जस्ङस्यादिना दीर्घः। पिअरं भाअरं जामा-अरं। पितरं भ्रातरं जामातरम्। अतोऽमः इति अकार-लोपः। मो विन्दुरिति विन्दुः। पिअरे भाअरे जामाअरे। पितॄन् भ्रातॄन् जामातॄन्। जस्शसोर्लोप इति शसो लोपः। ए सुप्यङिङसोरिति एत्वम्। पिअरेण भाअरेण जामाअरेण। पित्रा भ्रात्रा जामात्रा। टामोर्णं इति णः। पिअराउ भाअराउ जामाअराउ। पितुः भ्रातुः जामातुः। ङसेरादोदुहयः इति उत्वम्। जस्ङस्यांसु दीर्घः इति दीर्घः। पिअराहिंतो भाअराहिंतो जामाअराहिंतो। पितृभ्यः भ्रातृभ्यः जामातृभ्यः। भ्यसो हिंतो सुंतो इति हिंतो आदेशः। ए भ्यसीति भ्यस्येत्वे निषिद्धे ङसि पञ्च-म्युपलक्षणत्वात् जस्ङस्यांसु दीर्घ इति दीर्घः। पिअरस्स भाअरस्स जामाअरस्स। पितुः भ्रातुः जामातुः। स्सो ङसः इति स्सः। पिअराणं भाअराणं जामाअराणं। पितॄणां भ्रातॄणां जामा-तॄणाम्। टामोर्णः इति आमो णः। 'विन्दुष्टामोर्ण

इत्यादौ सन्नसन्नपि वा क्वचित्' इति बिन्दुः । पिअरे भाअरे जामाअरे । पितरि भ्रातरि जामतरि । ङेरेम्मी इति ङेरेत्वम् । क्वचिदपि लोपः इति अलोपः । पिअरेसु भाअरेसु जामाअरेसु । पितृषु भ्रातृषु जामातृषु । 'जस्शस्टाङस्सु वा स्यादुः पूर्वसूत्रानुवृत्तितः' । जसि-पिऊ भाऊ जामाऊ । उकारादेशे कृते अदन्तवद्भावात् जसो लोपो दीर्घोऽपि । पिउणो भाउणो जामाउणो । इदुतोः शसो णो इति णो आदेशः । टाप्रत्यये-पिउणा भाउणा जामाउणा । टा णा इति णादेशः । ङसि-पिउणो भाउणो जामाउणो । ङसो वेति णो आदेशः । मूलोदाहरणान्येव पाक्षिकोदाहरणानि ॥ ३२ ॥

सुबोधिनी ।

विशेषादिष्टः प्रकृतं न बाधते इति सुपीत्यनुवर्त्तते । एषां सम्बन्धिन ऋत अरः स्यात् । पिअरा भाअरा जामाअरा । पितरः भ्रातरः जामातरः । 'जस्शस्टाङस्सु वा स्यादुः पूर्वसूत्राऽनुवृत्तितः' जसि-पिऊ भाऊ जामाऊ । शसि-पिउणो भाउणो जामाउणो । पक्षे पिअरे भाअरे जामाअरे । टाप्रत्यये-पिउणा भाउणा जामाउणा । पक्षे पिअरेण भाअरेण जामाअरेण । ङसि-पिउस्स भाउस्स जामाउस्स । पक्षे पिअरस्स भाअरस्स जामाअरस्स ॥ ३३ ॥

# आ च सौ ॥ ३४ ॥

सञ्जीवनी ।

पूर्वसूत्रमनुवर्तते । पितृभ्रातृजामातॄणां सुप्रत्यये परे ऋकारस्य आकारादेशः स्यात् । अर आदेशश्च । पिआ भाआ जामाआ । पिता भ्राता जामाता । अन्त्यस्य हल इति सुलोपः । पक्षे पिअरो भाअरो जामाअरो । अत ओत् सोरिति ओत्वम् । क्वचिदपि लोप इत्यलोपः । आमन्त्रणेऽपि । हे पिआ हे भाआ हे जामाआ । हे पितः हे भ्रातः हे जामातः । 'पित्रादिभ्यः परस्यापि सावाकार ऋतो मतः । भत्ता भर्ता । कत्ता कर्त्ता । पोत्ता पोता । आमन्त्रणेऽपि । हे भर्तः । हे कर्तः हे पोतः । पूर्ववत् ओत्वं न भवति ॥ ३४ ॥

सुबोधिनी ।

एषामेव ऋतः सौ आत्वं स्यात् । पिआ भाआ जामाआ । चकारादरश्च । तेन पिअरो भाअरो जामाअरो । आमन्त्रणेष्वेवम् । 'पित्रादिभ्यः परस्यापि सावाकार ऋतो मतः' । भत्ता भर्त्ता । कत्ता कर्त्ता । पोत्ता पोता ॥ ३४ ॥

# राज्ञः ॥ ३५ ॥

सञ्जीवनी ।

पूर्वसूत्रमनुवर्तते । राजन्शब्दस्य सुप्रत्यये परे आकारादेशो भवति । वर्णान्तरस्य विधिरिति वचनादन्त्यस्य । राआ राजा । अन्त्यस्य हल इति नकारस्सुकारलोपः ॥ ३५ ॥

सुबोधिनी ।

राजन्शब्दे सौ परे आकारः स्यात् । वर्णान्तरस्य विधिरिति वचनादन्त्यस्य । राआ ॥ ३५ ॥

## आमन्त्रणे बिन्दुर्वा ॥ ३६ ॥

सञ्जीवनी ।

अर्थवशाद् विभक्तिपरिणाम इति वचनाद्राज्ञ इति पञ्चम्यन्तमनुवर्तते आत्मनोऽप्पाणो वेति अतः प्राक् । माविति षष्ठ्यन्तम् । तेन राजन्शब्दात् परस्यामन्त्रणेऽर्थे उत्पन्नस्य सुप्रत्ययस्य बिन्दुरादेशः स्यात् । हे राअं हे राजन् । पक्षे हे राआ । 'बिन्दुदीर्घौ विनाह्वाने राज्ञो हे राअ इत्यपि' । 'भवद्भगवतोर्बिन्दुः सावनामन्त्रणेऽपि च' । भवं भअवं । भवान् भगवान् । अन्त्यस्य हल इति नलोपः । एवं हे भवं हे भअवं । हे भवन् हे भगवन् ॥ ३६ ॥

सुबोधिनी ।

अर्थवशाद्विभक्तिविपरिणामेन राज्ञ इति पञ्चम्यन्तमनुवर्तते । राजन्शब्दादनन्तरमामन्त्रणेऽर्थे उत्पन्नस्य सुप्रत्ययस्य विन्दुः स्यात् । हे राअं हे राजन् । पक्षे हे राआ । 'विन्दुदीर्घौ विनाह्वाने राज्ञो हे राअ इत्यपि' । हे राअ । 'भवद्भगवतोविंन्दुः सावनामन्त्रणेऽपि च' । भवं भअवं भवान् भगवान् । हे भवं हे भअवं हे भवन् हे भगवन् ॥ ३६ ॥

# जसशस्ङसां णो ॥ ३७ ॥

सञ्जीवनी ।

जस्शस्ङस् इत्येतेषां त्रयाणां राजन्शब्दात् परेषां णो आदेशो भवति । जस्शसोर्लोप इत्यस्य स्सो ङसः इत्येतस्य चापवादः । जसः–राआणो राजानः । शस्–राआणो पेच्छ राज्ञः पश्य । आकारादेशश्च । पूर्वेण ए इत्यादेशः प्राप्तः । राआणो पुलअ राज्ञः पश्य । आ णोणमोरङसीत्यात्वम् ।

राए पच्छ राज्ञः पश्य । अत्र शस एत्वे कृते क्वचिदपि लोप इति जलोपावशिष्टाकारस्य लोपः । अनेनैवादेशद्वयसिद्धत्वात् पूर्वसूत्रे शस आदानं न कर्तव्यमित्याहुः । ननु जस्शसोर्लोप इति शसो लोपे कृते ए सुप्यङिङसोरिति एत्वे कृते राए

इत्यस्य सिद्धत्वात् किं पुनरायासेन। राआउ राआओ। ङसेरादोदुहय इति उ ओ इत्येतावादेशौ। जसूङस्यादिना दीर्घः। राए राजनि। ङेरेम्मी इति एत्वम्। राए पेच्छ राज्ञः प्रेक्षस्व। शस एच्चेत्येत्वम्। उभयत्रापि क्वचिदपि लोप इति अलोपः। 'भिसूभ्यसांङसूसुपामित्वं राज्ञोऽकारस्य चेष्यते'। भिसि–राइहिं राजभिः। पक्षे राएहिं। ए सुप्यङिङसोरित्येत्वम्। भ्यसि–राइहिंतो, राइसुंतो। पक्षे राआहिंतो राआसुंतो। ङसेः पञ्चम्युपलक्षणत्वात् जसूङस्यांसु दीर्घ इति दीर्घः। आमि–राइणं राज्ञाम्। टामोर्ण इति आमो णः। तस्मिन बिन्दुः। पक्षे राआणं। पूर्ववद् दीर्घः। सुपि राइसु राएसु राजसु। ए सुप्यङिङसोरिति एत्वम् ॥ ३७ ॥

सुबोधिनी।

राजन्शब्दात् परेषां जसूशसूङस् इत्येतेषां णो इति स्यात्। राआणो इति जश्शसोः। ङसि राइणो ॥ ३७ ॥

# शस एच्च[1] ॥ ३८ ॥

सुबोधिनी।

राजन्शब्दादुत्तरस्य शस एकारः स्यात्। चकारान् णो

(१) इत आरभ्य द्विचत्वारिंशत्तमसूत्रं यावत् सञ्जीवनी नोपलभ्यते।

इत्यपि । राए राआणो । अनेनैवादेशद्वयसिद्धे पूर्वसूत्रे शस्ग्रहणं न कर्त्तव्यमित्याहुः । राज्ञः शसो णो इत्यादेशो नित्यं प्राप्तोऽनेन सूत्रेण विकल्प्यते ॥ ३८ ॥

# अमो णं ॥ ३९ ॥

सुबोधिनी ।

राजन्शब्दात् अमो णं इति स्यात् । राआणं राजानम् । राआणमिति षष्ठीबहुवचने बिन्द्वागमस्य प्रकारान्तरेणाऽपि संभवात् अमादेशस्य मापकाभावाच्च आमो णमिति कैश्चित् पठितमिदं सूत्रं नादेयम् ॥ ३९ ॥

# टा णा ॥ ४० ॥

सुबोधिनी ।

टा इति लुप्तषष्ठ्यन्तं पदम् । राजन् शब्दात् टा इत्यस्य णा स्यात् । राइणा ॥ ४० ॥

# ङसश्च द्वित्त्वं वा जलोपश्च ॥ ४१ ॥

सुबोधिनी ।

ङस इत्यादेशिन आदेशो गृह्यते । राजन्शब्दात् ङसादेशस्य णो इत्यस्य द्वित्त्वं वा स्यात् । द्वित्त्वपक्षे राजन्शब्दस्य जकारलोपश्च । साचकजकारलोपार्थमयमारंभः । चकारात् टादेशस्य णा इत्यस्यापि परिग्रहः । द्वित्त्वं त्वत्र व्यञ्जनमात्रस्य ।

रण्णो राज्ञः । पक्षे राइणो । रण्णा पक्षे राइणा राज्ञा । 'णो ङसेर्णत्व-द्वित्वं स्यात् राज्ञो लोपश्च जस्य वा' । रण्णो राइणो राआ राआउ राआहिन्तो । एते पञ्चम्यां ङसौ ॥ ४१ ॥

# इदद्वित्वे ॥ ४२ ॥

सुबोधिनी ।

टा ङस इत्यनयोर्द्वित्वाऽभावपक्षे राजन्शब्दस्य इत्त्वं स्यात् । अन्त्यविधिबलान्निरुक्तजकारलोपानन्तरमत्रशिष्टस्य अकारस्य भवति । राइणा राज्ञा । राइणो राज्ञः । अद्वित्वे इति किम् ? रण्णा रण्णो । 'ङसिङ्योर्ज्जश्शसो राज्ञ इत्रादेशेऽनजादिके' । ङसौ-राइणो । ङौ–राइम्मि । जसि राइणो । शसि राइणो पक्षे रण्णो राअम्मि राआणो राआणो । आदेशेऽनजादिक इति वचनादजादौ न भवति । ङसौ राआओ राआउ–ङौ–राआए राए । 'भिस्भ्यसोरांसुपोरित्त्वं राज्ञोऽकारस्य चेष्यते'–राइहिं राएहिं राजाभिः । राइहिन्तो राइसुन्तो राआहिन्तो राआसुन्तो । राजभ्यः । राइणं राआणं राज्ञाम् । राइसु राएसु राजसु ॥४२॥

# आ णोणमोरङसि ॥४३॥

सञ्जीवनी ।

णो णं इत्यादेशौ । एतयोः परयोः राज्ञ इत्यस्य

आकारादेशो भवति । षष्ठ्येकवचनस्य ङस आदेशं वर्ज्जयित्वा। राआणो राजानः। जस्शस्ङसां णो इति णो आदेशः। राआणो णिअच्छ । राज्ञः पश्य । शस एच्चेति णो आदेशः । राआणं राज्ञाम्। आमो णं इति णं आदेशः । अङसीति किम् ? राइणो अण्णा राज्ञः आज्ञा । इदद्वित्वे इतीत्वम् ॥ ४३ ॥

सुबोधिनी ।

ङसादेशं वर्जयित्वा यौ णो णं इत्यादेशौ तयोः राजन्-शब्दान्तस्य आत्वं स्याद् । जश्शसोः-राआणो । अमि-राआणं अङसीति किम् ? राइणो अण्णा । राज्ञः आज्ञा ॥ ४३ ॥

# आत्मनोऽप्पाणो वा ॥४४॥

सञ्जीवनी ।

आर सुपीत्यतो मण्डूकप्लुतिन्यायेन सुपीत्यनुवर्तते सर्वादिरित्यतः प्राक् । तेन आत्मन् शब्दे सुपि प्रत्याहारे परे अप्पाण इत्यादेशो वा निपात्यते । प्रत्ययलोपागमवर्णविकारेषु यल्लक्षणेनानुपपन्नं तन्निपातनात् साध्यते इत्यर्थः । अप्पाणो आत्मा । अत ओत् सोरिति ओत्वम् । क्वचिदपि लोप

इत्यल्लोपः । अप्पाणा आत्मानः । जस्शसोर्लोप इति जसो लोपः । जस्ङस्यांसु दीर्घ इति दीर्घः । इत्यादयः पुंस्यकाराः अत्र समुचितेन रूपेणोदाहरणीयाः । अनादेशपक्षोदाहरणानि च उत्तरसूत्रोदाहरणान्येव ४४॥

सुबोधिनी ।

मण्डूकप्लुतिन्यायेन सुपीत्यनुवर्तते । सुपि परे आत्मन्-शब्दस्य अप्पाण इति निपात्यते । अप्पाणो अप्पा आत्मा ॥ ४४ ॥

## इद्द्वित्ववर्जं राजवद-नादेशे ॥ ४५॥

सञ्जीवनी ।

आत्मन इत्यनुवर्तते । राजा इव राजवत् अतिदेशार्थम् । तेन अनादेशपक्षे अप्पाण इत्यादेशा-भावपक्षे आत्मन्शब्दस्य सुपि प्रत्याहारे परे राजव-द्भावो भवति । राज्ञ आमन्त्रणे विन्दुर्वेत्यादीनि कार्याणि अतिदेशात् आत्मनो भवन्ति । किं सर्वाण्यपीत्याह इद्द्वित्ववर्जमिति इदाद्वित्व इति यत् इत्वं ङसश्च द्वित्वमित्यादिना यत् द्वित्वं तद्

वर्जयित्वा । अप्पा आत्मा । अदातो यथादिषु वेत्यत्वम् । आत्मनि प इति त्म इत्यस्य पः । तस्य शेषादेशादिना द्वित्वम् । अन्त्यस्य हल इति नकारसुकारयोर्लोपः । ततः प्रत्ययलोपपरिभाषया आ च सावित्यनुवर्तमाने राजवद्भावात् राज्ञ इत्यात्वम् । हे अप्पं हे आत्मन् । आमन्त्रणे बिन्दुर्वेति सोर्बिन्दुः । पक्षे आत्वम् । हे अप्प । 'बिन्दुदीर्घौ विनाह्वाने राज्ञो हे राअ इत्यपि' । इति बिन्दुदीर्घयोरभावः । अप्पाणो आत्मानः । जस्शस्ङसां णो इति जसो णो आदेशः । पूर्ववद् दीर्घः । यत्र त्वेकारस्तत्र क्वचिदपि लोप इत्यकारलोपः । अप्पाणं आत्मानम् । अमो णं इति णमादेशः । आ णोणमोरङसीति आत्वम् । इदुद्वित्ववर्जमिति किम ? अप्पणा आत्मना । टा णा इति णादेशः । अप्पाणो आत्मनः । जस्शस्ङसां णो इति ङसो णो आदेशः । ङसश्च द्वित्वं वेत्यादिना णाणोर इत्यादेशयोर्द्वित्वं प्राप्तम् । तन्न भवति । तदभावादेव द्वित्वं प्राप्तम् । तदपि न भवति । 'केचित्तु नित्यमप्पाणं भिसामोर्ङिसुपोर्विदुः' । अप्पाणेहिं आत्मभिः । भिसो हिमिति हिं । ए सुप्यङिङसोरित्येत्वम् । अप्पाणाण आत्मनाम् । टामोर्ण इति आमो णः । जस्ङस्यादिना दीर्घः ।

अप्पाणे आत्मनि । ङेरेम्मी इति एत्वम् । क्वचिदपि लोप इत्यल्लोपः । अप्पाणेसु आत्मसु । 'अन्यत्रादेशतोऽन्येषां टा इत्यस्य णिआ भवेत्' । अप्पाणिआ आत्मना ॥ ४५ ॥

सुबोधिनी ।

अप्पाण इत्यादेशाभावपक्षे आत्मशब्दस्य राजशब्दस्येवकार्यं स्यात् । किं राज्ञः आमन्त्रणे चेत्यादि सर्वकार्याण्यविशेषेणत्याह—इदुद्वित्ववर्जमित्यादिना । इदाद्वित्वं इति यद् इत्वं ङसश्च द्वित्वं वेत्यादिना यत् द्वित्वं विहितं तद्वर्ज्जम् । अप्पा आत्मा । हे अप्प हे अप्पा हे आत्मन् । अप्पाणो आत्मानः । अप्पाणो अप्पे आत्मनः । अप्पाणं आत्मानम् । इदुद्वित्ववर्जमिति किम् ? अप्पणा आत्मना । अप्पाणो आत्मनः । 'केचित्तु नित्यमप्पाणो भिसामोर्ङिसुपोर्विदुः' । अप्पाणेहिं आत्मभिः । अप्पाणाण आत्मनाम् । अप्पाणे आत्मनि । अप्पाणेसु आत्मसु । 'अन्यत्रादेशतोऽन्येषां टा इत्यस्य णिआ भवेत्' । अप्पाणिआ आत्मना ॥ ४५ ॥

## ब्रह्मादयोऽप्येवम् ॥ ४६ ॥

सञ्जीवनी ।

ब्रह्माद्या आत्मवदिति यावत् । ब्रह्मशब्देन सदृशा ब्रह्मादयः । एवं पूर्वप्रकारेण वा निपात्यते

कोऽयमभिप्रायः ? यथा सुपि परे आत्मशब्दस्य अप्पाण इति निपात्यते वा तथा ब्रह्मादीनामपि सुपिस्थानामनिर्देशतया बम्हाण इत्यादयो निपात्यन्ते। तथा इदु द्वित्ववर्ज्जं राजवदनादेशो इत्यनेन यथा आत्मशब्दस्य राजवद्भावस्तथैवादेशात् अत्र ब्रह्मादीनां राजवद्भावो द्रष्टव्यः । बम्हाणो ब्रह्मा । अत ओत् सोरित्योत्वम् । बम्हणा ब्रह्माणः। जस्‌शसोर्लोप इति जसो लोपः । जस्ङस्यादिना दीर्घः । बम्हाणं ब्रह्माणम् । अतोऽम इति अलोपः । बह्माण पेच्छ ब्रह्मणः प्रेक्षस्व । पूर्ववत् शसो लोपः । अनादेशे बम्हा ब्रह्मा । अन्त्यस्य हल इति नकारसुकारयोर्लोपः। ह्मल्ह्मेत्यादिना ह्स्योपरि मस्य स्थितिः । राजवद्भावात् राज्ञ इति आत्वम् । बम्हाणो ब्रह्माणः। शस एच्चेति णो आदेशः । पूर्ववदात्वम् । यत्र ह्रेकारः तत्र क्वचिदपि लोप इत्यलोपः ।

बम्हाणो ब्रह्मणो वा स्याद् यूनो जूआण इत्यपि।
राज्ञो राआण आदेशो ग्राव्णो गावाण इत्यपि ॥
अर्यमस्त्वज्जमाणो वा पूष्णः पूसाण इत्यपि ।
अद्धाणो त्वध्वनः स्थाने ब्रह्माद्या एवमादयः ॥

एषां च यत्र पक्षे निपातनं तत्रैते अकारान्तसमुचितेन रूपेण किलोदाहरणीयाः । अनिपा-

तनपक्षे त्वेते राजशब्दवदु इदाद्वित्वसूत्रे चात्म-शब्दवदुदाहरणीयाः । ब्रह्मादिपर्यन्ते राजप्र-कारेण यस्य विभक्तौ विशेषेण लक्षणं नोक्तं तत्र यथासम्भवं प्रकारान्तराल्लक्षणमनुसन्धेय-मिति ॥ ४६ ॥

सुबोधिनी ।

ब्रह्मशब्दादयोऽपि एवं अप्पाणनिपातनप्रकारेण वा निपात्यन्ते । निपातनाभावपक्षे चेदूद्वित्ववर्ज्जं राजशब्द-वत् कार्यं भजन्ते ।

वम्हाणो ब्रह्मणो वा स्यात् यूनो जूवाण इत्यपि ।
राज्ञो राआण आदेशो ग्राव्णो गावाण इत्यपि ॥
उक्ष्ण उच्छाण इत्येवं पूष्णः पूसाण इत्यपि ।
अद्धाण अध्वनः स्थाने ब्रह्माद्या एवमादयः ॥

अनिपातनपक्षे वम्हा ब्रह्मा इत्यादिक्रमेणोदाहरणानि ज्ञेयानि ॥ ४६ ॥

# सर्वादेः ॥ ४७ ॥

सञ्जीवनी ।

सर्वशब्द आदिर्यस्य स सर्वादिर्गणः । अधिका-रोऽयम् । यदित ऊर्ध्वमनुक्रमिष्यामः तत् सर्वा-

देः सर्वनाम्नो भवतीत्यर्थ इत्यधिकृतं वेदितव्यम् । सर्वादेरिति चार्थवशात् क्वचित् पञ्चम्यन्तं क्वचित् षष्ठ्यन्तमनुसन्धातव्यम् । ङेर्दों इति यावदयमधिकारः । उक्तं सर्वादीनि सर्वनामानीति । तथा च—

सर्वो विश्व उभोभयौ तरतमौ डादी किमन्येतर-
त्वंनेमान्यतरान्तराः समभवत्त्यत्तत्त्वदेतद्यदः ।
सीमेदंपरयुष्मदस्मदधरा द्व्येकोत्तरार्द्धादसः
पूर्वस्वापरदक्षिणावर इति त्रिंशत् समं पञ्चभिः॥४७॥

सुबोधिनी ।

सर्व आदिर्येषां ते सर्वादयः । सर्वादय सर्वनामशब्दाः ।
सर्वो विश्व उभोभयौ तरतमौ डादी किमन्येतर—
त्वन्नेमान्यतरान्तरा समभवत्त्यत्तत्त्वदेतद्यदः ।
सीमेदंपरयुष्मदस्मदधरा द्व्येकोत्तरार्द्धादसः
पूर्वस्वापरदक्षिणावर इति त्रिंशत् समं पञ्चभिः ॥

अतः परं यद्वक्तव्यं कार्यं तत् सर्वादेर्वेदितव्यम् । अधिकारोऽयम् । सर्वादेरित्यर्थवशादुत्तरसूत्रे क्वचित् पञ्चम्यन्तं क्वचित् षष्ठ्यन्तमनुमन्तव्यम् ॥ ४७ ॥

## जस एत् ॥ ४८ ॥

सञ्जीवनी।

सर्वादेः परस्य जस एकारादेशः स्यात्। जस्शसो-र्लोप इति लोपः प्राप्तः। सव्वे सर्वे। के इमे किमिदमोः। किमः कः इदमः इम इति च क इम इत्यादेशौ। जे ते यत्तदोः। अन्त्यस्य हल इति दलोपः। अण्णे इतरे अन्येतरयोः। सर्वत्र जस एत्वे कृते क्वचिदपि लोप इत्यलोपः। इत्यादयो-ऽन्येऽपि॥ ४८॥

सुबोधिनी।

सर्वादेः परस्य जस एकारः स्यात्। सव्वे सर्वे। एवं विश्वादीनामप्युदाहरणीयम्॥ ४८॥

# ङेः स्सिंम्मित्थाः॥४९॥

सञ्जीवनी।

सर्वादेः गणात् परस्य ङिप्रत्ययस्य स्सिं म्मि त्थ इत्येते कृतद्वित्वा त्रय आदेशाः भवन्ति। ङेरेम्मी इति एत्वस्यापवादः। सव्वस्सिं जस्सिं तस्सिं सर्वस्मिन् यस्मिन् तस्मिन्। सव्वम्मि जम्मि तम्मि। सव्वत्थ जत्थ तत्थ इत्यादयः॥ ४९॥

सुबोधिनी ।

सर्वादेः परस्य ङेः स्थाने स्सि म्मि त्थ इत्यादिश्यन्ते । सव्वस्सि जस्सि तस्सि कस्सि सव्वम्मि जम्मि तम्मि कम्मि सव्वत्थ जत्थ तत्थ कत्थ सर्वस्मिन् यस्मिन् तस्मिन् कस्मिन् इत्यादयः ॥ ४९ ॥

# इदमेतत्किंयत्तद्भ्यः टा इणा वा ॥ ५० ॥

सञ्जीवनी ।

टा इति लुप्तषष्ठ्यन्तम् । इणा इति लुप्तप्रथमान्तम् । इदम् एतत् किम् यत् तत् एभ्यः पञ्चभ्यः सर्वादिगणपठितेभ्यः परस्य टाप्रत्ययस्य इणा इत्यादेशो वा भवति । टामोर्ण इति नित्यो णकारादेशः प्राप्तः । स विकल्प्यते । इदमस्तावत्—इमिणा इमेण अनेन । एतदः—एदिणा एदेण एतेन । अन्त्यस्य हल इति दलोपः । ऋत्वादिषु तो दः इति दः । पक्षे कगचादिना तलोपः ॥ ५० ॥

सुबोधिनी ।

टा इति लुप्तषष्ठ्यन्तम् । इदम् एतद् यद् तद् किं एभ्यः

परस्य टा इत्यस्य इणा इति स्यात् । इमिणा इमेण अनेन । एदिणा एइणा एदेण एएण एतेन । किणा केण । जिणा जेण येन । तिणा तेण तेन ॥ ५० ॥

## आम एसिं ॥ ५१ ॥

सञ्जीवनी ।

इदमादिभ्यः परस्य आम् इत्यस्य एसिं इति वा स्यात् । इमेसिं इमाण एषाम् । एदेसिं एदाण एतेषाम् । किमः-केसिं काण केषाम् । किमः क इति कः । यतः—जेसिं जाण येषाम् । यत्र एसिं आदेशो न तत्र सर्वत्र जस्ङस्यादिना दीर्घः । 'सव्वेसिं आमि सव्वाणं सर्वालिङ्गेषु तत्समम्' ॥ ५१ ॥

सुबोधिनी ।

इदमादिभ्यः परस्य आम् इत्यस्य एसिं इति वा स्यात् । इमेसिं इमाण एषाम् । एदेसिं एदाण एएसिं एआण एतेषाम् । केसिं काण केषाम् । जेसिं जाण येषाम् । तेसिं ताण तेषाम् ॥ ५१ ॥

## किंयत्तद्भ्यो ङस आस ॥ ५२ ॥

सञ्जीवनी ।

आस इत्येतत् लुप्तप्रथमान्तम् । किम् यत् तत् एभ्यः परस्य ङसः आस इत्यादेशो वा भवति । स्सो ङस इति नित्यं स्सादेशः प्राप्तः । किमस्ता-वत्-कास । पक्षे कस्स कस्य । यदः—जास जस्स यस्य । तदः—तास तस्स तस्य ॥ ५२ ॥

सुबोधिनि ।

किम् यद् तद् एभ्यः परस्य ङस आस इति स्याद्वा । कास कस्स कस्य । जास जस्स यस्य । तास तस्स तस्य ॥ ५२ ॥

# इद्भ्यः स्सासे ॥ ५३ ॥

सञ्जीवनी ।

किं यत्तद्भ्य इत्यनुवर्तते । ओ त्तो दो ङसे-रनिदम इत्यतः प्राक् ङस् इत्यनुवर्तते । स्सासे इति द्विवचनान्तम् । इद्भ्यः इप्रत्ययान्तेभ्यः किंय-त्तद्भ्यः परस्य स्सासे इत्यादेशौ भवतः । टाङस्-ङीनामिदेदादत इत्येत एव प्राप्ताः । किमः-किस्सा कीसे कस्याः । किमः क इति कः । आदीतौ बहुल-मिति ईप्रत्ययः । क्वचिदपि लोप इति वा सन्धावचा-मित्यादिना वा अकारलोपः । पक्षे कीआ, कीए

कीअ । एवं यदः-जिस्सा जीसे यस्याः । पक्षे जीआ जीए जीइ जीअ । तदः-तिस्सा तीसे । पक्षे तीआ तीए तीइ तीअ । स्सादेशे सर्वत्र इदीतः पानीयादिषु इति इत्वम् । 'किंयत्तदुभ्यः भवत्याद्भ्यः स इत्येव तु वा ङसः ।' कास जास तास । आदीतौ बहुलमिति आप्रत्ययः । पूर्ववदकारलोपो वा सन्धिर्वा । पक्षे काइ काए जाइ जाए ताइ ताए । टाङस्ङीना-मिदेदादत इति ङस ए इ इत्यादेशौ । अ आ इत्येतौ न भवतः । नातोऽदातौ इति प्रतिषेधात् ॥५३॥

सुबोधिनी ।

इप्रत्ययान्तेभ्यः किं यत्तदुभ्यः परस्य ङसः स्सा से इत्यादेशौ वा स्तः । किस्सा कीसे कस्याः । जिस्सा जीसे यस्याः । तिस्सा तीसे तस्याः । पक्षे कीइ कीए कीअ कीआ । जीइ जीए जीअ जीआ । तीइ तीए तीअ तीआ । 'किं यत्तदुभ्यो भवत्यादुभ्यः स इ ए वा ङसस्तथा' । कास यास तास । काइ जाइ ताइ । काए जाए ताए ॥ ५३ ॥

# ङेर्हिं ॥ ५४ ॥

सञ्जीवनी ।

इदुभ्यः इति निवृत्तमनपेक्षितत्वात् । किम् यत्

तद्भ्यः परस्य ङिप्रत्ययस्य हिं इत्यादेशो वा भवति । ङेः स्सिंम्मित्था इत्येव प्राप्ताः । कहिं जहिं तहिं कस्मिन् यस्मिन् तस्मिन् । पक्षे कस्सिं कम्मि कत्थ । जस्सिं जम्मि जत्थ । तस्सिं तम्मि तत्थ । 'अन्यशब्दात् परस्यापि हिंकारो ङेर्विकल्प्यते' । अण्णेहिं अन्यस्मिन् । पक्षे अण्णस्सिं अण्णम्मि अण्णत्थ ॥ ५४ ॥

सुबोधिनी ।

किं यत्तद्भ्यः परस्य ङेः स्थाने हिं इत्यादिश्यते वा । कहिं जहिं तहिं । कस्मिन् यस्मिन् तस्मिन् । पक्षे कस्सिं कम्मि कत्थ इत्यादयोऽपि द्रष्टव्याः । 'अन्यशब्दात् परस्यापि हिंकारो ङेर्विकल्प्यते' । अण्णेहिं पक्षे अणस्सिं अण्णम्मि अण्णत्थ ॥५४॥

# आहे इआ काले ॥ ५५ ॥

सञ्जीवनी ।

ङेरित्यनुवर्तते । आहे इआ इति लुप्तप्रथमाद्विवचनान्तम् । किंयत्तद्भ्यः परस्य ङिप्रत्ययस्य आहे इआ इत्यादेशौ भवतो वा काले । ङेर्हिमिति ङेः स्सिंम्मित्था इत्येत एव प्राप्ताः । तदेवं षडादेशाः भवन्तीत्यर्थः । काहे कइआ । कस्मिन् काले कदा । पक्षे काहिं कस्सिं कम्मि कत्थ । यदः–

जाहे जइआ यस्मिन् काले यदा । पक्षे जहिं जस्सिं जत्थ । तदः—ताहे तइआ । तस्मिन् काले तदा । पक्षे तहिं तस्सिं तम्मि तत्थ । 'आला इत्यपि यत्तद्भ्यां काले वाच्ये वदन्ति ते' । जाला ताला यदा तदा । 'काले ङेरेतदस्याहे एकशब्दादिआ तु वा' । एत्ताहे एतस्मिन् काले । क्वचिदपि लोप इत्यलोपः । नीडादिष्विति तस्य द्वित्वम् । पक्षे ङः स्सिंम्मित्था इति एतस्सिं एतम्मि एत्थ । अत्र त्तत्थयोस्तलोपः इति तलोपः । एक्कइआ एकस्मिन् काले एकदा । पक्षे पूर्ववत् एक्कस्सिं एक्कम्मि एक्कत्थ । नीडादिष्विति चतुर्ष्वपि ककारस्य द्वित्वम् । 'आदेशः सर्वशब्दस्य काले ङेराइ इष्यते' । सव्वाइ सर्वस्मिन् काले सर्वदा । पक्षे सव्वस्सिं सव्वम्मि सवत्थ ॥ ५५ ॥

## सुबोधिनी ।

किं यत्तद्भ्यः परस्य ङः काले प्रतिपाद्ये आहे इआ इत्यादेशौ वा स्तः । काहे कइआ । जाहे जइआ । ताहे तइआ । पक्षे कहिं-इत्यादयः । 'आला इत्यपि यत्तद्भ्यां काले वाच्ये विधीयते' जाला ताला । 'काले तु एतदस्याहे एकशब्दादिआ तु वा' । एत्ताहे एतस्मिन् काले । पक्षे एअस्सिं एअम्मि एत्थ । एक्कइआ एकदा । पक्षे एक्कस्सिं एक्कम्मि एक्कत्थ । 'आदेशः सर्वशब्दस्य काले ङेराइ इष्यते' । सव्वाइ सर्व्वदा पक्षे पूर्ववत् ॥ ५५ ॥

# ओत्तोदो ङसेरनिदमः ॥ ५६ ॥

सञ्जीवनी ।

वेति निवृत्तम् । ओत्तोदो लुप्तप्रथमाबहुवचनान्तम् । अनिदमः इदंशब्दरहितात् सर्वादेः परस्य ङसिप्रत्ययस्य ओ त्तो दो इति त्रयः आदेशा भवन्ति । ङसेरादोदुहय इत्यस्य बाधः । सव्वओ सव्वत्तो सव्वदो सर्वस्मात् सर्वतो वा । अण्णओ अण्णत्तो अण्णदो अन्यस्मात् अन्यतो वा । तओ तत्तो तदो । तस्मात् ततो वा । अन्त्यस्य हल इति दलोपः । इत्यादयः । अनिदम इति किम् ? इमाओ इमाहि अस्मात् । अस्मादिदमः 'सर्वादिष्विदमो दीर्घो नत्वन्येषां ङसौ भवेदिति' दीर्घः । इमाहिंतो । 'ङसेरतः परस्येह हिंतो इत्यपि दृश्यते' । इति हिंतो आदेशः । पूर्ववद् दीर्घः । 'तो इत्यपि तदः प्राकुरादेशं ङसिना सह' । तो तस्मात् ॥ ५६ ॥

सुबोधिनी ।

ङसि प्रत्ययस्य ओत्तो दो इत्यादेशाः स्युः इदं शब्दं वर्जयित्वा । सव्वओ सव्वतो सव्वदो सर्वस्मात् । एवं विश्वादीनामुदाहरणीयम् । अनिदम इति किम् ? इमाओ इमाहि

इमाहिन्तो अस्मात् । 'तो इत्यपि तदः प्राहुरादेशं ङसिना सह' । तो तस्मात् ॥ ५६ ॥

# तदो ङसा से वा स्त्रियामपि ॥ ५७ ॥

सञ्जीवनी ।

से इति लुसप्रथमैकवचनान्तम् । न केवलं पुंनपुंसकयोः स्त्रीलिङ्गेऽपि तच्छब्दस्य ङस्प्रत्ययेन सह से इत्यादेशो भवति वा । पुंनपुंसकयोः स्सो ङस इति स्त्रियां तु टाङस्ङीनामिदेदादत इत्येत एव प्राप्ताः । ते विकल्प्यन्ते । से तस्य । पक्षे तस्स । से तस्याः पक्षे तीए तीआ । 'एतदोपि ङसा से वा त्रिलिङ्ग्या-मिष्यते बुधैः'। से एतस्य । पक्षे एतस्स । से एतस्याः पक्षे एआए एआइ । टाङस्ङीनामित्यादिना इ ए आदेशौ ॥ ५७ ॥

सुबोधिनी ।

स्त्रियामपि । ङस्प्रत्ययेन सह तच्छब्दस्य स्त्रियां से वा आदिश्यते । अपिशब्दात् पुंनपुंसकयोरपि । से तस्य तस्याः । पक्षे तस्स तीइ ताए इत्यादयः । 'एतदोऽपि ङसा से वा त्रिलिङ्ग्या-मिष्यते बुधैः' । से एतस्याः एतस्य वा । पक्षे एआइ एअस्स इत्यादयः ॥ ५७ ॥

# आमः सिं ॥ ५८ ॥

सञ्जीवनी ।

तद इति वेति स्त्रियामिति च अनुवर्तन्ते । सिमिति लुप्तप्रथमैकवचनान्तम् । तेन स्त्रीलिङ्गेऽपि तच्छब्दस्य आम्प्रत्ययेन सह सिं इत्यादेशो भवति । सिं तेषां पक्षे ताणं । सिं तासां पक्षे ताण । आदीतौ बहुलमिति आप्रत्ययः । 'आंटाभिस्सु तदः स्थाने ण इत्येतन् स्त्रियामपि' । णं पेच्छ तं प्रेक्षस्व । णेण कअं तेन कृतम् । णाइ कअं णाए कअं तया कृतम् । टाङस्ङीनामिदेदादत इति टाप्रत्यस्य इ ए एतावादेशौ । णाहिं कअं ताभिः कृतम् । शेषा-ददन्तवत् इत्यतिदेशात् भिसो हिं स्त्रियामपि । आदीतौ बहुलमिति आप्रत्ययः । 'स्त्रियामपि सहैवामा स्याच्च सिं इदमोऽपि वा' । सिं एषाम् । सिं आसाम् । पक्षे इमाण । आदीतौ बहुलमिति आपक्षे इमाण । टामोर्ण इति आमो णः । जस्ङस्यादिना दीर्घः ॥५८॥

सुबोधिनी ।

तच्छब्दस्य आम्प्रत्ययेन सह सिं वा आदिश्यते । स्त्रियां पुन्नपुंसकयोश्च । सिं तासां तेषां वा । पक्षे ताण ताणं वा । 'आंटा-भिस्सु तदः स्थाने ण इत्येषु स्त्रियामपि' । णं तं णेण तेन णेहिं तैः ।

णं तां णाइ णाए तया णाहिं ताभिः। 'स्त्रियामपि सहैवामा स्याच्च सिं इदमोऽपि वा' । सिं आसां एषां वा पक्षे इमाण ॥ ५८ ॥

# किमः कः ॥ ५९ ॥

सञ्जीवनी ।

ऋत आरः सुपि इत्यतः सुपीत्यनुवर्तते । उत्तरत्र च । सुपि प्रत्याहारे परे किंशब्दस्य कादेशः स्यात् । को कः । अत ओत् सोरिति ओत्वम् । के क एव । जसः एचेति एत्वम् । क्वचिदपि लोपः इत्यलोपः । कं कमेव । अतोऽमः इति अलोपः । कीइ कीए कथा कस्याः कस्यां वा । टाङस्ङीनामित्यादिना अत्र त्रयाणामन्यतमस्य इ ए इत्यादेशौ । काइं । इं जस्शसोर्दीर्घश्चेति जस्शसोरन्यतमस्य इं आदेशः । दीर्घश्च । 'नपुंसके स्वमोः कत्वं न किमः स्यादलुप्तयोः'। किं एदं किमेतत् । किं करेइ किं करोति ॥ ५९ ॥

सुबोधिनी ।

सुपि परे किमः कः स्यात् । को कः ॥ ५९ ॥

# इदम इमः ॥ ६० ॥

सञ्जीवनी।

सुपि प्रत्याहारे परे इदंशब्दस्य इमादेशः स्यात्। इमो अयम्। अत ओत् सोरित्योत्वम्। इमस्स अस्य। स्सो ङस इति स्सादेशः। इमेसु एषु। स्त्रियाम्-इमा इयम्। स्त्रियामात्। अन्त्यस्य हल इति सुलोपः। इमाओ इमाः। जसो वेति जस ओत्वम्। इमाए अनया अस्याः अस्यां वा। टाङसूङी-नामित्यादिना त्रयाणामन्यतमस्य एत्वम्। सर्वत्र आदीतौ बहुलमिति आप्रत्ययः। क्लीबे-इमाइं इमानि। इं जश्शसोर्दीर्घश्चेति जस्शसोरन्यतरस्य इं आदेशः दीर्घश्च। 'आदेशाविदमश्चान्यौ सौ पुंस्य-अमिअं स्त्रियाम्'। अअं भत्ता इअं भारिआ। अयं भर्त्ता इयं भार्य्या। 'इमिआ इति वादेशः सौ स्त्रियामिदमो भवेत्'। इमिआ इयम्। सर्वत्र अन्त्यस्य हल इति सुलोपः॥ ६०॥

सुबोधिनी।

सुपि परे इदम इम इति स्यात्। इमो अयं इमा इयम्। 'आदेशाविदमश्चान्यौ सौ पुंस्यअमिअं स्त्रियाम्'। अअं अयम्। इअं इयम्। 'इमिआ इति वादेशः सौ स्त्रियामिदमो भवेत्'। इमिआ इयम्॥ ६०॥

# अं स्सिंस्सयोर्वा ॥ ६१ ॥

सञ्जीवनी ।

इदम इत्यनुवर्तते । एतदः सोरोत्वं वा इत्यतः प्राक् । ङेः स्सिंस्सिंत्था इति यः स्सिं आदेशः स्सो ङस इति यः स्स आदेशः तयोरिदमः स्थाने अकारादेशः स्यात् वा । अस्सिं अस्मिन् । पक्षे इमस्सिं । अस्स पक्षे इमस्स अस्य । 'स्यात् प्रत्ययान्तरेऽप्यत्वं स्त्रियामन्यत्र चेदमः' । एहिं एभिः । अकारादेशस्य ए सुप्यङिङसोरिति एत्वम् । पक्षे इमेहिं । एसु एषु पक्षे इमेसु । पूर्ववदेत्वम् । आहिं इमाहिं आभिः । आदीतौ बहुलमिति आप्रत्ययः । तेन सन्धावकारादेशस्य चात्वम् । अदन्तवद्भावादिति भिसो हिं । आसु इमासु । 'इदमोऽत्वं स्त्रियामात्वं सह स्सा च ङसस्तु वा' । अस्सा अस्याः । पक्षे इमाइ इमाए ॥ ६१ ॥

सुबोधिनी ।

ङिङसादेशयोः स्सिंस्सयोः परयोरिदम अ इति वादिश्यते । अस्सिं इमस्सिं अस्मिन् । अस्स इमस्स अस्य । 'स्यात् प्रत्ययान्तरेऽप्यत्त्वं स्त्रियामन्यत्र चेदमः' । एहिं इमेहिं एभिः । एसु इमेसु एषु । आहिं इमाहिं आभिः । आसु इमासु आसु ।

'इदमोऽस्त्वं स्त्रियामात्वं सह स्सा च ङसस्तु वा' । अस्सा अस्याः । पक्षे इमाइ इमाए ॥ ६१ ॥

# ङेर्मेन हः ॥ ६२ ॥

सञ्जीवनी ।

चेति वर्तते । इदमः इम इत्यादेशे कृते मेन मकारेण सह ङिप्रत्ययस्य हकारादेशो भवति वा । ङेः स्सिंम्मित्था इति स्सिं म्मि त्थ इत्येते प्राप्ताः । इह अस्मिन् । पक्षे अस्सिं इमस्सिं ॥ ६२ ॥

सुबोधिनी ।

इदम उत्तरस्य ङिप्रत्ययस्य इदमः सम्बन्धिना मकारेण सह ह इति स्याद्वा । इह पक्षे इमस्सिं इमम्मि ॥ ६२ ॥

# न त्थः ॥ ६३ ॥

सञ्जीवनी ।

चेति निवृत्तम् । ङीत्यनुवर्तते । इदं परस्य ङेः त्थ इत्यादेशो न भवति । ङेर्मेन ह इति हवत् ङेः स्सिंम्मित्था इति च स्सिंम्मिवत् प्राप्तः । इह अस्मिन् । इमस्सिं इमम्मि ॥ ६३ ॥

सुबोधिनी ।

इदम्परस्य ङेः स्थ इति न स्यात् । इह इमस्सि इमम्मि अस्मिन् ॥ ६३ ॥

# नपुंसके स्वमोरिदमिणमिणमो ॥ ६४ ॥

सञ्जीवनी ।

नपुंसकलिङ्गे वर्तमानस्य इदमः इदं इणं इणमो इति त्रय आदेशा भवन्ति । सु अम् इत्येतयोः । सोः-इदं वणं । इणं वणं । इणमो वणं । इदं वनम् । अन्त्यस्य हल इति सुलोपः । मो बिन्दुरित्यादिना बिन्दुः । अमः-इदं वणं पेच्छ, इणं वणं पेच्छ, इणमो वणं पेच्छ । इदं वनं प्रेक्षस्व । त्रिष्वप्यमो लोपो वक्तव्यः । पूर्ववत् बिन्दुः । 'नपुंसक इमश्च स्यात् चतुर्थ इदमः स्वमोः' । इमं वणं । नपुंसके सोर्बिन्दुरिति सोर्बिन्दुः । इमं वणं पेच्छ । इणमो वणं पेच्छ । अतोऽम इत्यलोपः । मो बिन्दुः ॥ ६४ ॥

सुबोधिनी ।

सु अम् इत्येतयोः परयोर्नपुंसके इदंशब्दस्य इदं इणं

इणमो इत्यादेशाः स्युः । इदं इणं इणमो इदम् । 'नपुंसके इमश्च स्याच्चतुर्थ इदमः स्त्रमोः' । इमं इदम् ॥ ६४ ॥

# एतदः सोरोत्वं वा ॥६५॥

सञ्जीवनी ।

एतच्छब्दात् परस्य सुप्रत्ययस्य ओत्वं भवति । अन्त्यस्य हल इति दलोपे कृते अत ओत् सोरिति ओत्वं प्राप्तम् । एसो एषः । तदेतदोः सः सावनपुंसके इति तस्य सः । अन्त्यस्य हल इति दलोपः । क्वचिदपि लोप इत्यकारलोपः । पक्षे एस । अन्त्यस्य हल इति सुलोपः ॥ ६५ ॥

सुबोधिनी ।

एतच्छब्दादुत्तरस्य सुप्रत्ययस्य ओत्वं वा स्यात् । एसो एस एषः ॥ ६५ ॥

# त्तो ङसेः ॥ ६६ ॥

सञ्जीवनी ।

एतदः इत्यनुवर्तते । वेति वा । ओ त्तो दो ङसेरनिदम इति सिद्धत्वात् नियमार्थो योगः । तेन

एतच्छब्दात् परस्य ङसेः त्तो इत्ययं द्वितकारक आदेशो भवतीति नियम्यते। पक्षे ङसेरादोदुहय इत्येते वर्तन्ते। एत्तो एतस्मात्। अन्त्यस्य हल इति दलोपः। त्तोत्थयोस्तस्य लोप इति तलोपः। पक्षे एआओ एआहि। कगचादिना तलोपः। जस्ङस्यांसु दीर्घ इति दीर्घः॥ ६६॥

सुबोधिनी।

सिद्धे सत्यारम्भोऽयं नियमार्थः। तेन ओ त्तो दो ङसेरिति सूत्रेण सिद्धानां त्रयाणां मध्ये एको नियम्यते। एतच्छब्दादुत्तरस्य ङसेः सर्वाद्यधिकारः प्राप्तः त्तो इत्येवादेशो भवति। एत्तो एतस्मात। सामान्यतः प्राप्तास्तु न बाध्यन्ते। एसा एसाओ एआउ एआहि॥ ६६॥

# त्तत्थयोस्तस्य लोपः॥६७॥

सञ्जीवनी।

त्तो ङसेरिति यः त्तो आदेशः, ङः स्सिंम्मित्था इति यश्च त्थादेशः, तयोः परयोरेतदः साचस्तकारस्य लोपः स्यात। एत्तो एतस्मात्। एत्थ एतस्मिन्॥६७॥

सुबोधिनी ।

तो त्थ इत्येतयोः परयोरेतदस्तकारलोपः स्यात् । एत्तो एतस्मात् । एत्थ एतस्मिन् ॥ ६७ ॥

# तदेतदोः सः सावनपुंसके ॥ ६८ ॥

सञ्जीवनी ।

तस्यैवानुवर्तते । तदेतच्छब्दसम्बन्धिनः तकारस्य सकारादेशः स्यात् अनपुंसकलिङ्गे सौ परतः । सो पुरिसो स पुरुषः । एसो पुरिसो एस पुरिसो एष पुरुषः । एकत्र एतदः सोरोत्वं वेति ओत्वम् । अन्यत्र अन्त्यस्य हल इति सुलोपः । सा जुअई एसा जुअई । आदीतौ बहुलमिति आप्रत्ययः । पूर्ववत् सुलोपः । अत्र अन्त्यस्य हल इति दलोपः । अनपुंसक इति किम् ? तं वणं तद् वनम् । एणं वणं एतद् वनम् । नपुंसके सोर्बिन्दुरिति बिन्दुः । 'एस इत्येव साचाहुः स्त्रियामप्येतदः परे' । एस गई एषा गतिः । एस जुअई एषा युवतिः । आदीतौ बहुलमिति बहुलग्रहणात् आदीतोरनुत्पत्तिः । एस सरो एतत् सरः । एस जसो एतद् यशः । इत्यादि लिङ्गत्रयेऽपि साधारणं रूपमिति नपुंसकबुद्ध्या अपूर्वत्वेनान्ते स

इति विदधाति । तन्न समीचीनम् । यतस्तेषां प्रयत्नमन्तरेणापि वसन्तप्रावृट्शरदः पुंसीति सान्तस्य पुंस्त्वं पर्यवस्यति । न चापि एस रणमिति ग्रन्थशाब्दिका अनुमन्यन्ते ॥ ६८ ॥

सुबोधिनी ।

तदेतच्छब्दयोः सुप्रत्यये परे नपुंसकलिङ्गे सकारादेशः स्यात् । सो सः एसो एषः । सा एसा । 'एस इत्यत्र साबाहुः स्त्रियामप्येतदः परे' । एस एषा ॥ ६८ ॥

# अदसो दो मुः ॥ ६९ ॥

सञ्जीवनी ।

सुपीत्यपेक्ष्यते स्त्रियामिति च । अदस इति षष्ठ्यन्तम् । तेन लिङ्गत्रयेऽपि वर्तमानस्य अदसः सम्बन्धी यो दकारः तस्य मुरादेशो भवति । पुंसि अमू पुरिसा अमी पुरुषाः । शेषाददन्तवदित्यतिदेशात् अदन्तवद्भावात् जश्शसोर्लोप इति लोपः । अतएव जस्ङस्यादिना दीर्घः । अमुणो णिअच्छ अमून् पश्य । इदुतोः शसो णो इति णो आदेशः । अमुणा अमुना । टा णा इति णादेशः । अमुणो धणं अमुष्य धनम् । ङसो वेति णो आदेशः ।

अमूओ जुअइओ अमूः युवतयः । जसो वेति जस ओत्वम् । शेषाददन्तवदित्यतिदेशात् जसूङ्स्यांसु दीर्घ इति दीर्घः । अमूउ पेच्छ अमूः प्रेक्षस्व । स्त्रियां शस उदोताविति उ आदेशः । जसूशसूङ्स्यांसु दीर्घ इति दीर्घत्वे वक्तव्ये इदुतोः स्त्रियां दीर्घः । अमूइ अमूए अमूअ अमूआ अमुया अमुष्याः अमुष्यां वा । टाङस्ङीनामिदेदादत इति त्रयाणामन्यतमस्य इ ए अ आ इत्येते आदेशाः । पूर्ववद्दीर्घः ।

नपुंसके अमूइं अमूनि । इं जश्शसोर्दीर्घश्चेति इं आदेशः दीर्घश्च ॥ ६९ ॥

सुबोधिनी ।

सुपि परे अदस्सम्बन्धिनो दकारस्य मु इत्यादिश्यते । अमू अमूओ अमूइं अमी अमूः अमूनि ॥ ६९ ॥

# हश्च सौ ॥ ७० ॥

सञ्जीवनी ।

अदस इति स्त्रियामिति सुपीति त्रयमनुवर्तते । लिङ्गत्रयेऽपि अदसो दस्य हकारादेशः सुप्रत्यये परे चकारात्तु सुरादेशोऽपि । अह पुरिसो असौ पुरुषः । पक्षे अमू पुरिसो । सुभिस्सुप्सु दीर्घ इति दीर्घः ।

स्त्रियां—अह जुअई पक्षे अमू जुअई । क्लीबे-अह वणं । सर्वत्र अन्त्यस्य हल इति सुलोपः । पक्षे अमुं वणं । नपुंसके सोर्बिन्दुरिति बिन्दुः । अह इत्यत्र यथालिङ्गं अत ओत् सोरिति, आदीतौ बहुलमिति, नपुंसके सोर्बिन्दुरिति च प्राप्नुवन्ति ते न भवन्ति । अनभिधानात् ॥ ७० ॥

सुबोधिनी ।

सुपि प्रत्यये परे अदसो दकारस्य ह इत्यादिश्यते । अह अमु असौ इति स्त्रीपुंसकयोः अदसोः । ह इत्यादेशपक्षे पुल्लिङ्गादिविहितकार्याणि न भवन्त्यनभिधानात् ॥ ७० ॥

## पदस्य ॥ ७१ ॥

सञ्जीवनी ।

अधिकारोऽयम् । इत ऊर्ध्वं यदनुक्रमिष्यामः सुबन्तस्य पदस्यस्थाने तद् भवतीत्यधिकृतं वेदितव्यम् । उक्तं च सुप्तिङन्तं पदम् । छेदो इत्यतः प्रागयमधिकारः ॥ ७१ ॥

सुबोधिनी ।

अतः परं यत् कार्यं तत्पदस्य सुबन्तस्य स्थाने वेदितव्यम् । अधिकारोऽयम् ॥ ७१ ॥

# युष्मदस्तं तुमं ॥ ७२ ॥

सञ्जीवनी ।

ह्रश्च सौ इत्यतः सौ इत्यनुवर्तते । सुप्रत्यये सति सिद्धस्य युष्मत्सम्बन्धिनः पदस्य त्वमित्यस्य तं तुमं इत्यादेशौ भवतः। अनेकवर्णः सर्वस्य एकवर्ण आदेशः क्वचित् सर्वस्येति वचनात् । तं दिट्ठो । तुमं दिट्ठो । त्वं दृष्टः ॥ ७२ ॥

सुबोधिनी ।

सिद्धस्य युष्मदः सम्बन्धिनस्त्वमिति पदस्य सुबन्तस्य स्थाने तं तुममित्यादेशौ स्तः । तं तुमं त्वम् ॥ ७२ ॥

# तुं चामि ॥ ७३ ॥

सञ्जीवनी ।

युष्मद इत्यनुवर्तते । अस्मदो हं अहं अहअं सावित्यतः प्राक् । द्वितीयैकवचने अम्प्रत्यये सति सिद्धस्य युष्मदः पदस्य त्वामित्यस्य तुमित्यादेशो भवति । चकारात् तं तुममित्येतावपि । तुं पेच्छामि तं पेच्छामि तुमं पेच्छामि त्वां प्रेक्षे । 'युष्मदोऽमि पदस्य स्याच्चतुर्थस्तु तुमे इति' । तुमे पेच्छति ॥ ७३ ॥

सुबोधिनी ।

अमि परे सिद्धस्य युष्मदः त्वामिति पदस्य तुं इत्यादिश्यते । चकारात् तंतुमावपि । तं तुमं तुं त्वाम् । 'युष्मदोऽमि पदस्य स्याच्चतुर्थस्तु तुमे इति' । तुमे ॥ ७३ ॥

## तुज्झे तुज्झ तुम्हे जसि ॥ ७४ ॥

सञ्जीवनी ।

जस्प्रत्यये सति सिद्धस्य युष्मदः पदस्य यूयमित्यस्य तुज्झे तुज्झ तुम्हे इति त्रय आदेशा भवन्ति । तुज्झे तुज्झ तुम्हे गुरू । 'तज्झे तव्वे तम्हे चैव त्रयोऽन्ये युष्मदो जसि' । तज्झे तव्वे तम्हे गुरू यूयं गुरवः ॥७४॥

सुबोधिनी ।

जसि परे यूयमितिपदस्य तुज्झ तुम्हे तुज्झ इत्यादिश्यन्ते । तुज्झे तुज्झ तुम्हे यूयं । 'तज्झे तव्वे तम्हे चैव त्रयोऽन्ये युष्मदो जसि' तज्झं तव्वे तम्हे यूयम् ॥ ७४ ॥

## वो च शसि ॥ ७५ ॥

सञ्जीवनी ।

शस्प्रत्यये सति सिद्धस्य युष्मदः पदस्य युष्मा-

ानितपदस्य वो इत्यादेशः स्यात् चकारात् पूर्वे षडपि ।
वो रक्ख तुज्झे रक्ख तुज्झ रक्ख तुम्हे रक्ख
तज्झे रक्ख तव्वे रक्ख तम्हे रक्ख । युष्मान्
रक्ष ॥ ७५ ॥

सुबोधिनी ।

शसि परे सिद्धस्य युष्मानितिपदस्य वो इति स्यात् । चकारात् पूर्वे षडपि । वो तुज्झे तुम्हे तुज्झ तज्झे तम्हे तव्वे युष्मान् ॥७५॥

## टाङ्योस्तइ तए तुमइ तुमए तुमे ॥ ७६ ॥

सञ्जीवनी ।

टाप्रत्यये ङिप्रत्यये च सति सिद्धस्य युष्मदः पदस्य त्वयेत्यस्य त्वयीत्यस्य च तइ तए तुमइ तुमए तुमे इति प्रत्येकं पञ्चादेशा भवन्ति । तइ कअं । तए कअं । तुमइ कअं तुमए कअं । तुमे कअं । त्वया कृतम् । तइ ठिअं । तए ठिअं तुमे ठिअं तुमए ठिअं तुमइ ठिअं त्वयि स्थितम् ॥ ७६ ॥

सुबोधिनी ।

टाप्रत्यये ङिप्रत्यये च सिद्धस्य युष्मदः पदस्य त्वयेत्यस्य

त्वयीत्यस्य च तइ तए तुमइ तुमे तुमए इति पंचादेशाः स्युः । तइ तए तुमइ तुमे तुमए त्वया त्वयि ॥ ७६ ॥

# तुमम्मि च ङौ ॥ ७७ ॥

सञ्जीवनी ।

ङौ सिद्धस्य युष्मदः पदस्य त्वयीत्यस्य तुमम्मि आदेशः स्यात् । तुमम्मि ठिअं त्वयि स्थितम् ॥ ७७ ॥

सुबोधिनी ।

ङिप्रत्यये सिद्धस्य युष्मदः पदस्य तुमम्मि इत्यादिश्यते । तुमम्मि त्वयि ॥ ७७ ॥

# ङसि तुमो तुह तुज्झ तुव तुम्हाः ॥ ७८ ॥

सञ्जीवनी ।

ङस्प्रत्यये सिद्धस्य युष्मदः पदस्य तवेत्यस्य तुमो तुह तुज्झ तुव तुम्ह इत्येते पञ्च आदेशा भवन्ति । तुमो धणं तुह धणं तुज्झ धणं तुव धणं तुम्ह धणं तव धनम् ।

तज्झ तम्वे दिए तुम्ह तुमाइ तु तुमे तुमाः ।
युष्मदो ङसि सिद्धस्य स्युरष्टावपरेऽप्यमी ॥

तज्झ धणं । तम्वे धणं । दिए धणं । तुम्ह धणं तुमाइ धणं । तु धणं तुमे धणं । तुम धणं । तव धनम् ॥ ७८ ॥

सुबोधिनी ।

ङस्प्रत्यये सिद्धस्य युष्मदः पदस्य तवेत्यस्य पंचादेशाः स्युः । तुमो तुह तुज्झ तुव तुम्ह तव ।

तज्झ तम्वे दिए तुम्ह तुमाइ तु तुमे तुमाः ।
युष्मदो ङसि सिद्धस्य स्युरष्टावपरेऽप्यमी ॥
तज्झ तम्वे दिए तम्हे तमाइ तु तुमे तुमं तव ॥ ७८ ॥

# आङि च ते दे ॥ ७९ ॥

सञ्जीवनी ।

आङिति तृतीयैकवचनस्य ग्रहणम् । ङसीत्यनुवर्तते । तेन टाप्रत्यये सति सिद्धस्य युष्मदः पदस्य त्वयेत्यस्य तथा ङसि सिद्धस्य तवेत्यस्य च प्रत्येकं ते दे इत्यादेशौ भवतः । ते कअं । दे कअं । त्वया कृतम् । ते धणं । दे धणं । तव धनम् ॥ ७९ ॥

सुबोधिनी ।

आङिति टाप्रत्ययस्य ग्रहणम् । टाप्रत्यये सिद्धस्य त्वयेतिपदस्य ते दे इत्यादिश्येते । चकारात् ङसीत्यनुवर्त्तते । ते दे त्वया तव वा ॥ ७९ ॥

## तुमाइ च ॥ ८० ॥

सञ्जीवनी ।

चानुकृष्टमुत्तरत्र नानुवर्तते । तेन ङसीति निवृत्तम् । आङीति चानुवर्तते । टाप्रत्यये सिद्धस्य युष्मदः पदस्य त्वयेत्यस्य तुमाइ इत्यादेशो भवति । न केवलं पूर्वोक्ता एवेति । तुमाइ कअं त्वया कृतम् । 'आहुः ए दि तु इत्यन्यानादेशानाङि युष्मदः' । ए कअं दि कअं तु कअं । त्वया कृतम् ॥ ८० ॥

सुबोधिनी ।

टाप्रत्ययसिद्धस्य त्वयेत्यस्य तुमाइ इति स्यात् । तुमाइ त्वया । 'आहुः ए दि तु इत्यन्यानादेशानाङि युष्मदः' । ए दि तु त्वया ॥ ८० ॥

## तुज्झेहि तुब्भेहि तुम्हेहि भिसि ॥ ८१ ॥

सञ्जीवनी ।

भिस्प्रत्यये सति सिद्धस्य युष्मदः पदस्य युष्माभिरित्यस्य तुज्झेहि तुब्भेहि तुम्हेहि इति त्रय आदेशा भवन्ति । तुज्झेहि कअं । तुब्भेहि कअं । तुम्हेहि कअं । युष्माभिः कृतम् ॥ ८१ ॥

सुबोधिनी ।

भिसि सिद्धस्य युष्माभिरित्यस्य त्रय आदिश्यन्ते । तुज्झेहि तुब्भेहि तुम्हेहि युष्माभिः । 'तज्झेहि तब्भेहि तम्हेहि त्रयोन्ये युष्मदो भिसि' । तज्झेहि तब्भेहि तम्हेहि युष्माभिः ॥ ८१ ॥

## ङसौ तत्तो तइत्तो तुमाओ तुमाइ तुमाहि वा ॥ ८२ ॥

सञ्जीवनी ।

पञ्चम्येकवचने ङसि प्रत्यये सति सिद्धस्य युष्मदः पदस्य त्वदित्यस्य तत्तो तइत्तो तुमाओ तुमाइ तुमाहि इत्येते पञ्चादेशा भवन्ति । तत्तो अण्णो । तइत्तो अण्णो । तुमाओ अण्णो । तुमाइ अण्णो । तुमाहि अण्णो । त्वदन्यः ।

तुम्हाहिन्तो तम्हाहिन्तो तुहिन्तो युष्मदो ङसौ ।
अमी अपि त्रयः प्रोक्ताः पृथगादेशपञ्चकात् ॥

सुबोधिनी ।

आङिति टाप्रत्ययस्य ग्रहणम् । टाप्रत्यये सिद्धस्य त्वये-तिपदस्य ते दे इत्यादिश्येते । चकारात् ङसीत्यनुवर्त्तते । ते दे त्वया तव वा ॥ ७९ ॥

## तुमाइ च ॥ ८० ॥

सञ्जीवनी ।

चानुकृष्टमुत्तरत्र नानुवर्तते । तेन ङसीति निवृत्तम् । आङीति चानुवर्तते । टाप्रत्यये सिद्धस्य युष्मदः पदस्य त्वयेत्यस्य तुमाइ इत्यादेशो भवति । न केवलं पूर्वोक्ता एवेति । तुमाइ कअं त्वया कृतम् । 'आहुः ए दि तु इत्यन्यानादेशानाङि युष्मदः' । ए कअं दि कअं तु कअं । त्वया कृतम् ॥ ८० ॥

सुबोधिनी ।

टाप्रत्ययसिद्धस्य त्वयेत्यस्य तुमाइ इति स्यात् । तुमाइ त्वया । 'आहुः ए दि तु इत्यन्यानादेशानाङि युष्मदः' । ए दि तु त्वया ॥ ८० ॥

## तुज्झेहि तुब्भेहि तुम्हेहि भिसि ॥ ८१ ॥

सञ्जीवनी ।

भिस्प्रत्यये सति सिद्धस्य युष्मदः पदस्य युष्माभिरित्यस्य तुज्झेहि तुब्भेहि तुम्हेहि इति त्रय आदेशा भवन्ति । तुज्झेहि कअं । तुब्भेहि कअं । तुम्हेहि कअं । युष्माभिः कृतम् ॥ ८१ ॥

सुबोधिनी ।

भिसि सिद्धस्य युष्माभिरित्यस्य त्रय आदिश्यन्ते । तुज्झेहि तुब्भेहि तुम्हेहि युष्माभिः । 'तज्झेहि तब्भेहि तम्हेहि त्रयोऽन्ये युष्मदो भिसि' । तज्झेहि तब्भेहि तम्हेहि युष्माभिः ॥ ८१ ॥

## ङसौ तत्तो तइत्तो तुमाओ तुमाइ तुमाहि वा ॥ ८२ ॥

सञ्जीवनी ।

पञ्चम्येकवचने ङसि प्रत्यये सति सिद्धस्य युष्मदः पदस्य त्वदित्यस्य तत्तो तइत्तो तुमाओ तुमाइ तुमाहि इत्येते पञ्चादेशा भवन्ति । तत्तो अण्णो । तइत्तो अण्णो । तुमाओ अण्णो । तुमाइ अण्णो । तुमाहि अण्णो । त्वदन्यः ।

तुम्हाहिन्तो तम्हाहिन्तो तुहिन्तो युष्मदो ङसौ ।
अमी अपि त्रयः प्रोक्ताः पृथगादेशपञ्चकात् ॥

तुम्हाहिन्तो अण्णो । तम्हाहिन्तो अण्णो । तुहिन्तो अण्णो त्वदन्यः इत्यादि ॥ ८२ ॥

सुबोधिनी।

ङसि प्रत्यये सिद्धस्य युष्मत्पदस्य पंचादिश्यन्ते । तत्तो तइत्तो तुमाओ तुमाइ तुमाहि त्वत् ।

तुम्हाहिन्तो तम्हाहिन्तो तुहिन्तो युष्मदो ङसौ
अमी अपि त्रयः प्रोक्ताः पृथगादेशपंचकात् ॥
तुम्हाहिन्तो तम्हाहिन्तो तुहिन्तो ॥ ८२ ॥

## तुज्झाहिन्तो तुज्झासुन्तो भ्यसि ॥ ८३ ॥

सञ्जीवनी।

पञ्चमीबहुवचने भ्यसि सिद्धस्य युष्मदः पदस्य युष्मदित्यस्य तुज्झाहिन्तो तुज्झासुन्तो इत्येतावादेशौ भवतः । तुज्झाहिन्तो तुज्झासुन्तो अण्णो । युष्मदन्यः ।

तुज्झेहिन्तो तुम्हेहिन्तो तुम्हासुन्तो तुम्हेत्तो तुम्हाहिन्तो तुज्झन्तो तुहेहि तुम्हेहि तुज्झेहि तुब्भासुन्तो इति चान्ये दश प्रख्याता युष्मदो भ्यसि । तुज्झेहिन्तो

अण्णो एवं तुम्हाहिन्तो अण्णो । तुम्हासुन्तो अण्णो । तुम्हेन्तो अण्णो इत्यादि उदाहरणीयम् ॥ ८३ ॥

सुबोधिनी ।

भ्यसि प्रत्यये सिद्धस्य युष्मदः पदस्य एतावादेशौ स्तः । तुज्झाहिन्तो तुज्झासुन्तो युष्मत् । तुज्झहिन्तो तुम्हेहिन्तो तुम्हासुन्तो तुज्झत्तो तुम्हाहिन्तो तुज्झन्तो तुज्झेहि तुम्हेत्तो तुहेहि तुम्हेहि इति दशाऽन्ये युष्मदो भ्यसि प्रोक्ताः ॥८३॥

## वो ते तुज्झाणं तुम्हाणं आमि ॥ ८४ ॥

सञ्जीवनी ।

आमि सिद्धस्य युष्मदः पदस्य युष्माकमित्यस्य वो ते तुज्झाणं तुम्हाणं इत्येते चत्वार आदेशा भवन्ति । वो धणं ते धणं । तुज्झाणं धणं । तुम्हाणं धणं । युष्माकं धनम् । 'तुज्झ तुब्भ तुम्ह इति त्रयोऽन्ये चापि युष्मदः' । तुज्झ धणं तुब्भ धणं तुम्ह धणं । युष्माकं धनम् ॥ ८४ ॥

सुबोधिनी ।

आम्प्रत्यये युष्मदः पदस्य चत्वार आदिश्यन्ते । वो ते तुज्झाणं तुम्हाणं युष्माकम् ॥ ८४ ॥

# तुज्झेसु तुब्भेसु तुम्हेसु सुपि ॥ ८५ ॥

सञ्जीवनी ।

सप्तमीबहुवचने सुपि सति सिद्धस्य युष्मदः पदस्य युष्मासु इत्यस्य तुज्झेसु तुब्भेसु तुम्हेसु इति त्रय आदेशा भवन्ति । तुज्झेसु ठिअं । तुब्भेसु ठिअं तुम्हेसु ठिअं । युष्मासु स्थितम् ॥ ८५ ॥

सुबोधिनी ।

सुपि युष्मदः पदस्य एते स्युः । तुज्झेसु ठिअं तुम्हेसु ठिअं तुब्भेसु ठिअं । युष्मासु स्थितम् ॥ ८५ ॥

# अस्मदो हं अहं अहअं सौ ॥ ८६ ॥

सञ्जीवनी ।

पदस्येत्येव । सुप्रत्यये सति सिद्धस्य अस्मदः पदस्य अहमित्यस्य हं अहं अहअं इति त्रय आदेशा भवन्ति । हं जाणामि । अहं जाणामि । अहअं जाणामि । अहं जानामि ॥ ८६ ॥

सुबोधिनी ।

सुप्रत्यये सिद्धस्य अस्मदः पदस्य अहमित्यस्य हं अहं अहअं इति त्रय आदेशा भवन्ति । हं अहं अहअं अहम् ॥ ८६ ॥

# अम्मिरम्मि च ॥ ८७ ॥

सञ्जीवनी ।

अस्मद इत्यनुवर्तते । छेदों इत्यतः प्राक् सावि-त्यनुवर्तते । सुप्रत्यये सति सिद्धस्य अस्मदः पदस्य अ-हमित्यस्य अमि प्रत्यये च सिद्धस्य मामित्यस्य अम्मि आदेशो भवति । अम्मि जप्पामि अहं जल्पामि । अम्मि पेच्छ मां प्रेक्षस्व । 'सावस्मदो भवत्यत्र म्मि इत्येष च पञ्चमः' । म्मि करोमि अहं करोमि ॥ ८७ ॥

सुबोधिनी ।

सु अम् प्रत्यययोः सिद्धस्यास्मदः पदस्य अम्मि इत्यादिश्यते । अम्मि अहं मां वा । 'सावस्मदो भवत्यत्र म्मि इत्येष च पञ्चमः' म्मि अहम् ॥ ८७ ॥

# मं ममं च ॥ ८८ ॥

सञ्जीवनी ।

चानुकृष्टमुत्तरसूत्रे नानुवर्तते इति सावि‌ति निवृत्तम् । अमीत्यनुवर्तते । अमि सिद्धस्य अस्मदः पदस्य मामित्यस्य मं ममं इत्यादेशौ भवतः । मं रक्ख ममं रक्ख । मां रक्ष । 'चत्वारोऽन्येऽस्मदो-

ऽमि स्युर्मिमं णो अम अम्ह च' । मिमं रक्खउ णो रक्खउ अम रक्खउ अम्ह रक्खउ मां रक्षतु ॥८८॥

सुबोधिनी ।

चानुक्तस्तु सुवन्न नानुवर्त्तत इति साविति निवृत्तम् । अमि सिद्धस्यास्मदः पदस्य एतावादिश्येते । मं ममं माम् । 'चत्वारोऽन्येऽष्मदोऽमि स्युर्मिमं णो अम अम्ह च' । मिमं णो अम अम्ह माम् ॥ ८८ ॥

# अम्हे जस्शसोः ॥ ८९ ॥

सञ्जीवनी ।

जसि शसि सिद्धस्य अस्मदः पदस्य वयमिति अस्मानित्यस्य च अम्हे इत्यादेशो भवति । अम्हे जाणिमो वयं जानीमः । अण्हे पालेउ अस्मान् पालयतु । 'अम्हो अम्ह तथैवैतौ जश्शसोरस्मदो मतौ' । अम्हो बुज्झामो वयं बुध्यामहे । अम्हो सासति अम्ह सासति अस्मान् शासति ॥ ८९ ॥

सुबोधिनी ।

जसि शसि च अस्मदः सिद्धस्य पदस्य अम्हे इति स्यात् । अम्हे वयं अस्मान् वा । 'अम्हो अम्ह तथैतौ च जस्शसोरस्मदो मतौ' । अम्हो अम्ह वयं अस्मान् वा ॥ ८९ ॥

# णो च शसि ॥ ९० ॥

सञ्जीवनी ।

शसि प्रत्यये सति सिद्धस्य अस्मदः पदस्य अस्मानित्यस्य णो इत्यादेशः स्यात् । न केवलं पूर्वोक्तास्त्रय एव । णो हसइ अस्मान् हसति ॥ ९० ॥

सुबोधिनी ।

शस्प्रत्यये अस्मद पदस्य णो इति स्यात् । णो अस्मान् ॥९०॥

# आङि मे ममाइ ॥ ९१ ॥

सञ्जीवनी ।

आङि तृतीयैकवचने टाप्रत्यये सिद्धस्य अस्मदः पदस्य मयेत्यस्य मे ममाइ इत्येतावादेशौ भवतः । मे हीरइ ममाइ हीरइ मया ह्रियते ॥ ९१ ॥

सुबोधिनी ।

टाप्रत्यये सिद्धस्यास्मदः पदस्य मे ममाइ एतौ स्तः । मे ममाइ मया ॥ ९१ ॥

# ङौ च मइ मए ॥ ९२ ॥

सञ्जीवनिः ।

आङीत्यनुवर्तते । टाप्रत्यये सिद्धस्य अस्मदः पदस्य मयेत्यस्य ङिप्रत्यये च मयीत्यस्य च प्रत्येकं मइ मए इत्यादेशौ स्याताम् । मइ मुणिओ मए मुणिओ मया ज्ञातः । मइ ठिअं मए ठिअं मयि स्थितम् । 'टाप्रत्ययेऽस्मदो णे मि स्यातां द्वावपरावपि'। णे दिट्ठा मि दिट्ठा मया दृष्टा ॥ ९२ ॥

सुबोधिनी ।

टाप्रत्यये ङिप्रत्यये सिद्धस्यास्मदः पदस्य एतौ स्तः । मइ मए मया मयि वा । 'टाप्रत्ययेऽस्मदो णे मि स्यातां द्वावपरावपि' । णे मि मया ॥ ९२ ॥

# ममम्मि च ॥ ९३ ॥

सञ्जीविनी ।

ङावित्येव । ङिप्रत्यये सिद्धस्य अस्मदः पदस्य मयीत्यस्य ममम्मि इत्यादेशश्च भवति । न केवलं पूर्वोक्तावेव । ममम्मि ठिअं । मयि स्थितम् ॥ ९३ ॥

सुबोधिनी ।

ङिप्रत्यये सिद्धस्यास्मदः पदस्य ममम्मि इत्यादिश्यते । चकारात् पूर्वोक्तावपि । ममम्मि मयि ॥ ९३ ॥

# अम्हेहिं भिसि ॥ ६४ ॥

सञ्जीवनी ।

भिसि प्रत्यये सिद्धस्य असमदः पदस्य अस्माभिरित्यस्य अम्हेहिं इत्यादेशः स्यात् । अम्हेहिं भणिअं अस्माभिर्भणितम् । 'णे अम्हे अम्ह अम्हाण चत्वारोऽन्येऽस्मदो भिसि' । णे सुअं अम्हे सुअं अम्ह सुअं अम्हाण सुअं अस्माभिः श्रुतम् ॥ ९४ ॥

सुबोधिनी ।

भिसि प्रत्यये सिद्धस्य अस्मदः पदस्य अम्हेहिं इत्यादेशो भवति । अम्हेहिं अस्माभिः । 'णे अम्हे अम्ह अम्हाण चत्वारोऽन्येऽस्मदो भिसि' । णे अम्हे अम्ह अम्हाण अस्माभिः ॥९४॥

# मत्तो मइत्तो ममाओ ममाउ ममाहि ङसौ ॥ ६५ ॥

सञ्जीवनी ।

ङसि प्रत्यये सिद्धस्य अस्मदः पदस्य मदित्यस्य मत्तो मइत्तो ममाओ ममाउ ममाहि इत्येते पञ्चादेशा भवन्ति । मत्तो अण्णो मइत्तो अण्णो ममाओ अण्णो ममाउ अण्णो ममाहि अण्णो मदन्यः ॥ ९५ ॥

सुबोधिनी ।

ङसौ सिद्धस्यास्मदः पदस्य पंचादिश्यन्ते । मत्तो मइत्तो ममाओ ममाउ ममाहि मत् ॥ ९५ ॥

## अम्हाहिन्तो अम्हासुन्तो भ्यसि ॥ ९६ ॥

सञ्जीवनी ।

भ्यस्प्रत्यये सति सिद्धस्य अस्मदः पदस्य अस्मदित्यस्य अम्हाहिन्तो अम्हासुन्तो इत्येतावादेशौ भवतः । अम्हाहिन्तो इअरो अम्हासुन्तो इअरो अस्मदितरः। 'अह्मेहिन्तो च अम्हेहि अम्हेन्तो वाऽस्मदो भ्यसि' । अम्हेहिन्तो गआ अम्हेहि गआ अम्हेन्तो गआ अस्मद् गताः ॥ ९६ ॥

सुबोधिनी ।

भ्यसि प्रत्यये सिद्धस्यास्मदः पदस्य एतावादिश्येते । अम्हाहिन्तो अम्हासुन्तो अस्मत् ॥ ९६ ॥

## मे मम मह मज्झ ङसि ॥ ९७ ॥

सञ्जीवनी ।

ङस्प्रत्यये सिद्धस्य अस्मदः पदस्य ममेत्यस्य मे मम मह मज्झ इत्येते चत्वार आदेशा भवन्ति। मे पिओ मम पिओ मह पिओ मज्झ पिओ मम प्रियः ॥ ९७ ॥

सुबोधिनी ।

ङसि प्रत्यये सिद्धस्यास्मदः पदस्य एते स्युः । मे मम मह मज्झ मम ॥ ९७ ॥

# णो अम्ह अम्हाण अम्हे आमि ॥ ९८ ॥

सञ्जीवनी ।

आमि सिद्धस्य अस्मदः पदस्य अस्माकमित्यस्य णो अम्ह अम्हाण अम्हे इत्येते चत्वार आदेशा भवन्ति। णो पई अम्ह पई अम्हाण पई अम्हे पई अस्माकं पतिः। 'अन्योऽस्मदो भवेद्रूपं णे इत्यपि च पञ्चमः'। णे वल्लहो अस्माकं वल्लभः ॥ ९८ ॥

सुबोधिनी ।

आम्प्रत्यये सिद्धस्यास्मदः पदस्य एते स्युः । णो अम्ह अम्हाण अम्हे अस्माकम् ॥ ९८ ॥

# अम्हेसु सुपि ॥ ६६ ॥

सञ्जीवनी।

सुपि सप्तमीबहुवचने सिद्धस्य अस्मदः पदस्य अस्मासु इत्यस्य अम्हेसु आदेशः स्यात। अम्हेसु ठिअं अस्मासु स्थितम्। 'अम्हासु इति वादेशो द्वितीयोऽप्य-स्मदः सुपि'। अम्हासु ठिअं। सर्वेषामपि युष्मदस्मत्-प्रयोगाणां किमपि लिंगं नास्ति। तथा चोक्तं—'अलिङ्गे युष्मदस्मदी' इति। संख्याः ष्णान्ता युष्मदस्मदव्ययम-लिङ्गमिति। 'बिन्दुष्टामोर्णे इत्यादौ सन्नसन्नपि वा क्वचित्'। धम्मेणं धम्मेण धर्मेण। टामोर्णे इति टाप्रत्य-यस्य णः। ए सुप्यङिङसोरित्येत्वम्। जम्माणं जम्माण जन्मनाम्। पूर्ववदामो णः। जसूङस्यादिना दीर्घः। कम्मेहिं कम्मेहि कर्मभिः। भिसो हिमिति हिम्। गामाउ गामाउ। गामाहि गामाहिं ग्रामात्। ङसेरादो-दुहय इति उ हि इत्येतावादेशौ। सरेसुं सरेसु सरस्सु। एतेषु सतो बिन्दोर्वा अभावः। राआणं राआण राज्ञाम्। आमो णम् इति णमादेशः। आ णोणमोर-ङसीत्यात्वम्। अप्पाणं अप्पाण आत्मनाम्। अत्रापि इदुद्वित्ववर्जमित्यादिना राजवद्भावात् आमो णमिति णम्। राजवद्भावादेव पूर्ववदात्वम्। अत्र तु सतो

विन्दोरसत्त्वं वा। तुम्हं तुम्ह तव। तुम्हेसुं तुम्हेसु युष्मासु। अस्य युष्मदः पदस्य तुज्झेसु तुम्भेसु तुम्हेसु सुपीति तुम्हे आदेशः। अम्हेहिं अम्हेहि अस्माभिः। अम्हेहिं भिसीति अम्हेहिं आदेशः। महं मह मम। अस्याऽस्मदः पदस्य मे मम मह मज्झ ङसीति महादेशः। अम्हं अम्ह अम्हाणं अम्हाण अस्माकम्। अम्हेसु अम्हेसुं अस्मासु। अस्य अस्मदः पदस्य अम्हेसु सुपीति अम्हेसु आदेशः। इत्यादौ लक्षणानुसारेणाविन्दुष्वपि विन्दुसद्भावा व्यवस्थितविभाषारूपेण द्रष्टव्याः॥ ९९॥

सुबोधिनी।

सुपि सिद्धस्यास्मदः पदस्य अम्हेसु इति स्यात्। अम्हेसु अस्मासु। 'अम्हासु इति चादेशो द्वितीयोऽप्यस्मदः सुपि'। अम्हासु। अत्र युष्मदस्मत्प्रयोगाणां किमपि लिङ्गं नास्ति। तथा चोक्तं—अलिङ्गे युष्मदस्मदी इति। संख्याः ष्णान्ता युष्मदस्मदव्ययमलिङ्गम्। 'विन्दुष्टामोर्ण इत्यादौ सन्नसन्नापि वा क्वचित्'। धम्मेणं धम्मेण धर्म्मेण। जम्माणं जम्माण जन्मनां इत्यादौ। कम्मेहि कम्मेहिं कर्मभिः। गामाउं गामाहिं गामाउ गामाहि ग्रामात्। सरेसुं सरेसु सरस्सु। तुम्हं तुम्ह तव। तुम्हाण तुम्हाणं युष्माकम्। तुम्हेसुं तुम्हेसु युष्मासु। अम्हेहिं अम्हेहि अस्माभिः। महं मह ममं मम मम। अम्हं अम्ह अम्हाणं अम्हाण अस्माकम्। अम्हेसुं अम्हासु

अस्मासु । इत्यादौ लक्ष्यानुसारेणाबिंदुष्वपि बिन्दुसद्भावो व्यवस्थितविभाषया द्रष्टव्यः । पदस्येत्यधिकारो निवृत्तः ॥९९॥

## द्वेर्दो ॥ १०० ॥

सञ्जीवनी ।

सुपीति प्रत्याहारोऽपेक्ष्यते । अस्मद इति निवृत्तम् । पदस्येति च । स्वादौ विभक्तिगणे परे द्विशब्दस्य दो इत्यादेशः स्यात् । दोहिं द्वाभ्याम् । द्विवचनस्य बहुवचनमिति भ्यामो भिस् । तस्य शेषाददन्तवद्भावात् भिसो हिमिति हिमादेशः । दोसु द्वयोः । पूर्ववत् द्विशब्दात् सुप् । सुपः सुरिति सुः ॥ १०० ॥

सुबोधिनी ।

सुपीत्यनुवर्त्तते । द्विशब्दस्य सुपि परे दो इत्यादिश्यते । दोहि द्वाभ्याम् ॥ १०० ॥

## त्रेस्ती ॥ १०१ ॥

सञ्जीवनी ।

सुपीति वर्तते । स्वादौ विभक्तिगणे परे त्रिशब्दस्य ती आदेशो भवति । तीहिं तीसु । इत्येतयोः सिद्धौ योगारम्भो न कर्तव्य इत्याहुः ॥ १०१ ॥

सुबोधिनी ।

त्रिशब्दस्य सुपि परे ती इत्यादिश्यते । तीहिं त्रिभिः । प्रपञ्चार्थं सूत्रद्वयं प्रयोगस्यान्यथा सिद्धत्वादिति कश्चित् ॥१०१॥

## तिणि जश्शस्भ्याम् ॥१०२॥

सञ्जीवनी ।

त्रेरित्यनुवर्तते । जस् शस् इत्येताभ्यां प्रत्ययाभ्यां सह त्रिशब्दस्य तिणि इत्यादेशो भवति । पूर्वेण ती आदेशः प्राप्तः । तिणि ट्ठिआ । तिणि पेच्छ । त्रयः स्थिताः । त्रीन् प्रेक्षस्व ॥ १०२ ॥

सुबोधिनी ।

त्रिशब्दस्य जसा शसा च सह तिणि आदिश्यते । तिणि त्रयः त्रीन् वा ॥ १०२ ॥

## द्वेर्दुवे दोणि ॥ १०३ ॥

सञ्जीवनी ।

जश्शस्भ्यामित्यनुवर्तते । उत्तरत्र च । जस्शस्भ्यां सह द्विशब्दस्य दुवे दोणि इत्यादेशौ भवतः । द्वेर्दो इति दो आदेशः प्राप्तः । दुवे ट्ठिआ ।

दोणि दिट्ठआ दो दिट्ठआ द्वौ स्थितौ । दुवे रक्ख दोणि रक्ख दो रक्ख द्वौ रक्ष । 'द्वेर्जश्शस्भ्यां सह स्यातां द्वावन्यौ वेणि वे इति' । वेणि हुवन्ति । वे हुवन्ति । द्वौ भवतः । वेणि पेच्छ । वे पेच्छ । द्वौ प्रेक्षस्व ॥ १०३ ॥

सुबोधिनी ।

द्विशब्दस्य जश्शस्भ्यां दुवे दोणि इत्यादेशौ स्तः । स्पष्टम् । 'द्वेर्जश्शस्भ्यां सह स्यातां द्वावन्यौ वेणि वे इति' । वेणि वे दुवे दोणि द्वौ इति ॥ १०३ ॥

# चतुरश्चत्तारो चत्तारि ॥ १०४ ॥

सञ्जीवनी ।

चतुर्शब्दस्य जस्शस्भ्यां सह चत्तारो चत्तारि इत्येतावादेशौ स्याताम् चत्तारो एदे । चत्वार एते । चत्तारो गेण्ह चतुरो गृहाण । जश्शस्भ्यामिति किम् ? चऊहिं चतुर्भिः । कगचादिना तलोपः । अन्त्यस्य हल इति रलोपः । शेषाददन्तवदित्यतिदेशात् भिसो हिं । सुभिस्सुप्सु दीर्घ इति दीर्घः । एवं चऊसु चतुर्षु ॥ १०४ ॥

सुबोधिनी ।

चतुर्शब्दस्य जस्शस्भ्यां सह एतौ स्तः । चत्तारो चत्तारि चत्वारः चतुरो वा । जश्शस्भ्यामिति किम्? चऊहिं चऊसु ॥१०४॥

# एषामामो ण्हं ॥ १०५ ॥

सञ्जीवनी ।

एषां द्वित्रिचतुःशब्दानां सम्बन्धिन आम्-प्रत्ययस्य ण्हं आदेशः स्यात् । दोण्हं द्वयोः । द्वेर्दो इति दो आदेशः । तिण्हं त्रयाणाम् । त्रेस्ती इति ती आदेशः । तस्य इदीतः पानीयादिष्विति ह्रस्वम् । चउण्हं चतुर्णाम् । 'कतिपञ्चादिशब्दानां आमो ण्हो नैव दीर्घता' । जस्शस्ङस्यादिना दीर्घत्वं प्राप्तम् । कइण्हं कतीनाम् । पञ्चण्हं पञ्चानाम् । छण्हं षण्णाम् । षट्शावकसप्तपर्णेषु छ इति छः । अन्त्यस्य हल इति टलोपः । सत्तण्हं सप्तानाम् । उपरि लोप इत्यादिना पलोपः । शेषादेशादिना तकारस्य द्वित्वम् । इत्यादीनां द्वेर्दो इत्यादिसूत्रषट्के विशेषस्याविभासनात् लिङ्गत्रयेऽपि सामान्यं द्रष्टव्यम् ॥ १०५ ॥

सुबोधिनी ।

द्वित्रिचतुर्शब्दानां आम्प्रत्ययस्य ण्हं इति स्यात् । दोण्हं द्वयोः

तिण्हं त्रयाणाम् चउण्हं चतुर्णाम् । 'कतिपञ्चादिशब्दानामामो ण्हं नैव दीर्घता'। कइण्हं कतीनाम्। पंचण्हं पंचानाम्। छण्हं षण्णाम् सत्तण्हं सप्तानाम्। कत्यादीनां लिङ्गत्रयेऽपि साम्यम् ॥१०५॥

# शेषाददन्तवत् ॥ १०६ ॥

सञ्जीवनी ।

अतिदेशार्थमिदम्। उक्तादन्यः शेषः। अदन्तादिवत् अदन्तवत्। अत ओत् सोरिति प्रकरणे अदन्तात् यानि कार्याणि अभिहितानि अनकारान्तादपि अकारन्तादिवत् तानि भवन्तीत्यतिदिश्यते। उक्तं च तत्रैव—

अदन्ताद्यो विधिः प्रोक्तः शेषादप्यतिदेशतः ।
आदन्तादिदुदन्तात् स ईदूदन्तादपीष्यते ॥

उदाहरणानि च तत्राभिहितानि । 'अकारान्तवदादन्तात् शसो लोपाय वेष्यते' । बाला पेच्छ बालाः प्रेक्षस्व । जश्शसोर्लोप इति शसो लोपः । पक्षे बालाओ पेच्छ। स्त्रियां शस उदोताविति ओत्वम्। 'ङसेर्यदा हिरादेशो नादन्तवदिदुतोर्विधिः' ङसेरादोदुहय इति ओदुदादेशवत् प्राप्तः। गिरीओ गिरीउ साणूओ साणूउ गिरेः सानोः। आकारादेशोऽपि न भवति न ङिङस्योरेदाताविति प्रतिषेधात् ।

'ए सुप्यङिङसोः सूत्रे नेष्टं शेषाददन्तवत्' । रामाओ सामाओ रामाः श्यामाः । जसो वेति जस ओत्वम् । सालिणो पीलुणो शालीन् पीलून् । इदुतोः शसो णो इति णो आदेशः । सहीओ बहूओ । सखीः वधूः । स्त्रियां शस उदोताविति ओत्वम् । अदन्तवद्भावात् एत्वं न भवतीत्यर्थः । 'अकारलोपसूत्रेऽपि नेष्टं शेषाददन्तवत्' । क्वचिदपि लोप इत्यत्रेत्यर्थः । सव्वाओ भव्वाओ सर्वाः भव्याः । बुद्धीओ धेणूओ बुद्धयः धेनवः । शेषाददन्तवदित्यदन्तवद्भावात् जसूङस्यांसु दीर्घ इति दीर्घः । सहीओ बहूओ सख्यः बध्वः । सर्वत्र जसो वेति जस ओत्वम् । उदाहृतं चान्यत्र यथायोग्यमित्यलमतिप्रसङ्गेन ॥ १०६ ॥

सुबोधिनी ।

उक्तादन्यः शेषः । विशेषसूत्रैर्न यस्य कार्याणीतियावत् । अकारान्तादत ओत् सोरित्यादिसूत्रैर्यानि आदिश्यन्ते तानि पूर्वमेवाऽभिहितानि । 'अकारान्तवदादन्तात् शसो लोपाय वेष्यते' । बाला बालाओ बालाः । गिरिओ गिरिउ गिरेः । भाणूओ भाणूउ भानोः । 'ए सुप्यङिङसोः सूत्रे नेष्टं शेषाददन्तवत्' । रामाओ रामाः शालिणो शालीन् पीलुणो पीलून् सहीओ सखीः बहूओ वधूः । 'अकारलोपे सूत्रेऽपि नेष्टं शेषाददवन्तवत्' । सव्वाओ

सख्यः बुद्धीओ बुद्धयः धेणूओ धेनवः सहीओ सख्यः वहूओ वध्वः ॥ १०६ ॥

# न ङिङस्योरेदातौ ॥ १०७॥

सञ्जीवनी ।

अकारान्तरहितात् प्रातिपदिकात् परयोः ङिङ- स्विप्रत्यययोर्यथासंख्यं एत् आत् इत्येतावादेशौ न भवतः॥ पूर्वेणादन्तवद् भावात् ङेरेम्मी इति म्मिआदेशवत् एकारादेशोऽपि प्राप्तः । तथैव ङसेरादोदुहय इति ओ उ हि इत्यादेशवत् आकारादेशोऽपि प्राप्तः । ङौ- गिरिम्मि तरुम्मि । गिरौ तरौ । दहिम्मि महुम्मि दधिन दधनि मधुनि । पुंनपुंसकयोरेवायमेत्व- निषेधः । स्त्रियां तु ङावदन्तवद्भावात् अप्रानिषेध एव । टाङसिङीनामिदेदादत इत्यादेशात् । यतोऽदन्त- वद्भावे प्राप्ते अनेन एकारादेशः प्रतिषिध्यते तेनेह ङेरेत्वं भवत्येव । बुद्धीए धेणूए । बुद्धौ धेनौ । जस्श- सूङस्ङिषु दीर्घत्वं वक्तव्यमिति इदुतोः स्त्रियामिति दीर्घत्वम् । ङसेरातः—गंगाओ गंगाउ गंगायाः । गंगाहिन्तो । 'ङसेरतः परस्येह हिन्तो इत्यपि दृश्यते'। इति पूर्वेण अदन्तवद्भावात् हिन्तो आदेशः । इदुद्भ्यां-गिरीओ गिरीउ गिरिहिन्तो गिरेः ।

ङसेरातः-गंगाओ धेणूओ साणूउ साणूहिन्तो सानोः। उभयत्रापि पूर्वेण अदन्तवद्भावात् जश्शस्ङस्यांसु दीर्घ इति दीर्घः। हिकारादेशः कस्मान्न भवति ? 'ङसेर्यदा हिरादेशो नादन्तवदिदुतोर्विधिः' इति निषेधात्। ईदूद्भ्यां-तरुणीओ तरुणीउ तरुणीहिन्तो तरुणीहि तरुण्याः। वहूओ वहूउ वहूहि वहूहिन्तो वध्वाः। गंगाओ इत्यादिषु अपादानव्यक्तये आगत इत्यादिपदं योज्यम् ॥ १०७ ॥

सुबोधिनी।

अकारान्तरहितात् प्रातिपदिकात् परयोः ङिङसिप्रत्यययोर्यथासंख्यं ए आ इत्यादेशौ न भवतः। गिरिम्मि गिरौ। गिरीउ गिरीओ गिरेः ॥ १०७ ॥

# ए भ्यसि ॥ १०८ ॥

सञ्जीवनी।

नेत्येव। भ्यस्प्रत्यये परे नकारान्तस्य एकारादेशो न भवति। ए सुप्यङिङसोरिति प्राप्तः। एवं च एत्वे प्रतिषिद्धे जस्ङस्यांसु दीर्घ इत्यत्र ङसेः पञ्चम्युपलक्षणत्वात् दीर्घत्वं प्रवर्तते। पञ्चाहिन्तो पञ्चासुन्तो

पञ्चभ्यः । सत्ताहिन्तो सत्तासुन्तो सप्तभ्यः । भ्यसो हिन्तो सुन्तो इति हिन्तो सुन्तो आदेशौ ॥ १०८ ॥

सुबोधिनी ।

भ्यस्प्रत्यये परे नकारान्तस्य एकारादेशो न भवति । पंचाहिन्तो पंचासुन्तो पंचभ्यः ॥ १०८ ॥

# द्विवचनस्य बहुवचनम् ॥ १०९ ॥

सञ्जीवनी ।

सुपां तिङां च विभक्तीनां सम्बन्धिनो द्विवचनस्य औ तस् इत्येवंप्रभृतेः यथाक्रमं जस् झि इति बहुवचनमादेशो भवति । सुपां तावत्–दो हत्था द्वौ हस्तौ । उभयत्रापि औकारस्य जस् । द्वेर्दो इति दोआदेशः । हत्था इत्यत्र स्तस्य थः । तस्य द्वित्वे वर्गे युजः पूर्व इति तः । जश्शसोर्लोप इति जसो लोपः । जस्ङस्यांसु दीर्घ इति दीर्घः । दो हत्थे पेच्छ । द्वौ हस्तौ प्रेक्षस्व । अत्र औकारस्य शस् आदेशः । हत्थ इत्यत्र पूर्ववत् शसो लोपे कृते ए सुप्यङिङसोरिति एत्वम् । दोहिं हत्थेहिं द्वाभ्यां हस्ताभ्याम् । भ्यामो भिसि कृते दोहिं इत्यत्र शेषाददन्तवदित्यतिदेशात् भिसो हिमिति हिं ।

छेदों इति दो आदेशः । बिन्दुष्टामोर्ण इत्यादिना हिमादेशे बिन्दुः । दोहिन्तो हत्थाहिन्तो द्वाभ्यां हस्ताभ्याम् । अत्र भ्यामो भ्यस् । तस्य भ्यसो हिन्तो सुन्तो इति हिन्तो आदेशः । अनेनैव शेषाददन्तवद्भावात् दोहिन्तो इत्यत्र हिन्तो आदेशः । हत्थाहिन्तो इत्यत्र जसूङस्यांसु दीर्घ इति ङसेः पञ्चम्युपलक्षणत्वात् दीर्घः । दोण्हं हत्थाणं द्वयोः हस्तयोः । ओस आम् । एकत्र एषामामो ण्हं इति ण्हं आदेशः । हत्थाणं इत्यत्र टामोर्ण इति णः । तस्मिन् बिन्दुष्टामोर्ण इत्यादिना बिन्द्वागमः । दोसु हत्थेसु । द्वयोः हस्तयोः । ओसः सुप् । एः सुप्यङिङसोरित्येत्वम् । तिङां-दो होन्ति द्वौ भवतः । भू सत्तायामित्यस्य भुवो होहुवाविति हो आदेशः । तस्मात् परस्य प्रथमपुरुषद्विवचनस्य तसः न्तिरादेशः । तस्य न्तिहेत्थामोमुमा बहुष्विति न्तिरादेशः । तुवे तुम्हे पढह । तुवे तुम्हे पढित्थ । द्वौ युवां पठथः । पठ व्यक्तायां वाचीत्यस्मात् परस्य मध्यमपुरुषस्य द्विवचनस्य थसः थादेशः । तस्य पूर्ववत् ह इत्था इत्यादेशौ । शेषाणामदन्ततेति धातोरदन्तत्वम् । इत्थादेशे क्वचिदपि लोप इति वा सन्धावचामित्यादिना वा अकारलोपः । ठो ढः इति ठस्य ढः । दोणि अम्हे जाणीमो द्वावावां

जानीवः । ज्ञा अवबोधने इत्यस्य ज्ञो जाणमुणौ इति जाण आदेशः । तस्मात् परस्य उत्तमपुरुष-द्विवचनस्य वसो मसादेशः । अस्य पूर्ववत् मोमुम इत्येतेषामन्यतम आदेशः । इच्च बहुष्विति प्रकृते एत्वमित्वं वा । दो रमन्ति द्वौ रमेते । रमु क्रीडाया-मित्यस्मात् परस्य प्रथमपुरुषस्य द्विवचन आतामित्यस्य बहुवचनं झआदेशः । तस्मात् न्तिहेत्थेत्यादिना न्तिरादेशः । तथाऽऽत्मनेपदस्य बहुवचनमादेशः । शेषाणामदन्ततेति धातोरदन्तत्वम् । दुवे तुम्हे रमह रमित्था वा । द्वौ युवां रमेथे । अत्राऽऽथामि-त्यस्य बहुवचनं ध्वमित्यादेशः । पूर्ववत् ह इत्था इत्यादेशौ । अदन्तत्वं पूर्ववत् । पूर्ववत् ह इत्था इत्यादि कृते क्वचिदपि लोप इत्यलोपः । दोणि रमामो रमिमो द्वौ आवां रमावहे । अत्र उत्तमपुरुष-द्विवचनस्य वहीत्यस्य महिङ् आदेशः । तस्य पूर्ववत् मो मु म इत्येतेषामन्यतम आदेशः । अदन्तत्वं पूर्ववत् । तस्य इच्च बहुषु इति इत्वमात्वं वा ॥१०९॥

सुबोधिनी ।

सुपां तिङां च विभक्तीनां सम्बन्धिनो द्विवचनस्य औ तस् इत्यादेर्बहुवचनमादिश्यते । दो हत्था द्वौ हस्तौ । दो होन्ति द्वौ भवतः ॥ १०९ ॥

# चतुर्थ्याः षष्ठी ॥११०॥

सञ्जीवनी ।

चतुर्थीविभक्तेः स्थाने षष्ठीविभक्तिर्भवति । ङे भ्यां भ्यस् इत्येतेषां ङस् ओम् आम् इति त्रय आदेशा भवन्ति । बम्हणस्स देसु । ब्राह्मणाय देहि । स्सो ङस इति स्सः । बम्हणाए देसु । ब्राह्मण्यै देहि । अत्र ङस्ङीनामिदेदादत इति एकारादेशः। बम्हणाण देसु । ब्राह्मणेभ्यो देहि । पूर्ववदामो णः दीर्घत्वं च । ह्णष्णेत्यादिना हस्योपरि मस्य स्थितिः । णमो देवाणं । सोत्थि माणुसाणं । नमो देवेभ्यः । स्वस्ति मानुषेभ्यः ॥ ११० ॥

सुबोधिनी ।

चतुर्थ्या विभक्तेः षष्ठी विभक्तिरादिश्यते । बम्हणस्स देसु ब्राह्मणाय देहि । एवं बम्हणाण ब्राह्मणाभ्यां ब्राह्मणेभ्यो वा ॥ ११० ॥

# क्वचिन्न तादर्थ्ये ॥ १११ ॥

सञ्जीवनी ।

तादर्थ्येऽर्थे विहितायाः चतुर्थ्याः स्थाने षष्ठी न

भवति । गमणाअ उज्जतो गमनाय उद्यतः । द्यय्यर्यां चछजा इति द्यस्य जः । देवाअ बली देवाय बलिः । घराअ दारुं गृहाय दारु । इत्यादौ संस्कृतवच्चतुर्थी वक्तव्या । क्वचिद्ग्रहणं अबहुत्वार्थम् । तादर्थ्येऽपि बहुवचनस्य षष्ठी भवत्येव । देवाणं बलीओ घराणं दारुइं । देवेभ्यो बलयः गृहेभ्यो दारूणि । 'क्वचिदन्य-विभक्त्यर्थे दृश्यन्तेऽन्या विभक्तयः' । तथा चोक्तं-व्यत्ययोऽप्यासामिति । क्वचित् तृतीयार्थे सप्तमी । अच्छीसु पिज्जसि । अक्षिभ्यां पीयसे । क्वचित् सप्तम्यर्थे द्वितीया । रत्तिं दिट्ठो रात्रौ दृष्ट इत्यादिषु । ये तु कस्स सुमरसि कं स्मरसीत्यादौ द्वितीयायाः स्थाने षष्ठी विदधति । तन्न समीचीनम् । यतः संस्कृतश-ब्दानुसारेणैव स्मृत्यर्थे कर्मणि द्वितीयाषष्ठ्यौ विधीयेते भवत्येव कस्य स्मरसीति । 'अन्यादृश्यपि वीप्सायां द्विरुक्तिः क्वापि दृश्यते' । अंगमंगाइं अङ्गा-न्यङ्गानि । अंगमंगाण अंगानामंगानाम् । अंगमंगसु अङ्गेषु अङ्गेषु । वच्च वच्चह व्रजत व्रजत । होहोइ भवति भवति । इत्यादिषु ॥ १११ ॥

इति सर्वनाम ।

इति प्राकृतसञ्जीवन्यां सुब्विधिः पञ्चमः ॥



सुबोधिनी ।

तादर्थ्येऽर्थे विहितायाश्चतुर्थ्याः क्वचित् षष्ठी विभक्ति-र्न स्यात् । घराअ दारुं गृहाय दारु । इति संस्कृतवत् चतुर्थी । क्वचिद् ग्रहणमबहुत्वार्थम् । तेन तादर्थ्येऽपि बहुवचनस्य षष्ठी विभक्तिर्भवत्येव । देवाणं बली देवेभ्यो बलिः । 'क्वचिदन्य-विभक्त्यर्थे दृश्यन्तेऽन्या विभक्तयः' । तथा चोक्तम्—व्यत्ययो-ऽप्यासामिति । अच्छीसु पिज्जसि अक्षिभ्यां पीयसे । अत्र तृतीयास्थाने सप्तमी । रत्तिं दिट्ठो रात्रौ दृष्टः । सप्तमीस्थाने द्वितीया । 'अन्यादृश्यपि वीप्सायां द्विरुक्तिः क्वापि दृश्यते' । अंगमंगाइं अंगान्यंगानि अंगमंगाण अंगानामंगानां अंगमंगेसु अंगेष्वङ्गेषु । वच्चवच्चह व्रजत व्रजत होहोइ भवति भवति इत्यादिषु ।

वृत्तौ प्राकृतसूत्राणां सदानन्दस्य निर्मितौ
परिच्छेदः सुबोधिन्यां पञ्चमः सुब्विधिर्गतः ।

# अथ षष्ठः परिच्छेदः ।



## अथ तिङ्विधिरुच्यते ।

## ततिपोरिदेतौ ॥ १ ॥

सञ्जीवनी ।

आत्मनेपदपरस्मैपदयोः प्रथमपुरुषैकवचनयोः प्रत्यययोः ततिबित्येतयोः प्रत्येकं इ ए इत्येतावादेशौ भवतः । तकारोऽसन्देहार्थः । रमइ रमए रमते । रमु क्रीड़ायामित्यस्मादात्मनेपदिनः परस्य तप्रत्ययस्य इ ए इत्यादेशौ । शेषाणामदन्ततेति धातोरदन्तत्वम् । विरमइ विरमए । एतस्मात् विपूर्वात् परस्मैपदिनः परस्य तिपः इ ए इत्यादेशौ । पूर्ववददन्तत्वम् । अत्र यथासंख्यं तिप इ तस्य ए इति न भवति, सिप्थासोः सि से इत्यत्र सिपः सिकारादेशविधानसामान्यात् यथासंख्यपरिभाषाया अनित्यत्वज्ञापनात् । ततिपोरिदेतौ इति व्यत्ययेन निर्देशात् यथासंख्याभावः ।

'शौरसेन्या विभाषासु भवेदिरपि तिप्तयोः'। यथा—

चित्ते विहुट्टदि न खुट्टदि सा गुणेसुं
सेज्जासु लोट्टदि विसट्टदि दिम्मुहेसुं ।
बोलम्मि वट्टदि पवट्टदि कव्वबंधे
झाणे न तुट्टदि चिरं तरुणी तरट्टी ॥(कर्पूर मञ्जरी, २-४.)

सिद्धावस्थायां साध्यावस्थायां वा लक्ष्यवशात् परिभाषेयम् । अनियमे नियमः परिभाषा । ततिपोरिदेतौ इत्यादिना एकाचो हीअ इत्येवमन्येन प्रकारेण न ये तिबादीनामादेशा विधास्यन्ते ते सिद्धावस्थायां भूते एके भवन्ति । साध्यावस्थायां वर्तमाने वा काले लक्ष्यवशात् भवन्तीति परिभाष्यते। भूते-पेच्छइ पेच्छए प्रैक्षत प्रैक्षिष्ट प्रेक्षांचक्रे वा । ईक्ष दर्शने इत्यस्मात् प्रपूर्वात् परस्य आत्मनेपद-प्रथमपुरुषैकवचनस्य तप्रत्ययस्य ततिपोरिदेताविति इ ए इत्यादेशौ। शेषाणामदन्ततेति धातोरदन्तत्वम्। सर्वत्र लवरामिति रेफलोपः । सन्धावचामित्यादिना धातूपसर्गयोः सन्धावेत्वम् । अक्ष्यादिषु छ इति क्षस्य छः । तस्य वर्गे युज पूर्व इति चः । हसइ हसए अहसत् अहसीत् जहास वा । हसे हसने इत्यस्मात् परस्य तिपः पूर्ववत् इ ए इत्यादेशौ। वर्तमाने तु प्रथमसूत्रोदाहरणानि एतान्यपि॥ १ ॥

सुबोधिनी ।

आत्मनेपदीयप्रथमपुरुषैकवचनस्य त इत्यस्य परस्मैपदीयप्रथमपुरुषैकवचनस्य तिबित्यस्य च इकार एकारश्च स्याताम् । रमइ रमए रमते । विरमइ विरमए विरमति । ततिपोरिति व्यत्ययेन ग्रहणात् यथासंख्यं न भवति । 'शौरसेन्या विभाषायां भवेदिरपि तिप्तयोः' । यथा—'चित्ते विहुट्टदि न तुट्टति सा गुणेसुं' इत्यादौ । सिद्धावस्थायां साध्यावस्थायां वा लक्ष्यवशात् परिभाषेयम् । अनियमे नियमः परिभाषा । ततिपोरिदेतावित्यादिना एकाचो हीअ इत्येवमन्येन प्रकारेण न ये तिबादीनामादेशा विधास्यन्ते ते सिद्धावस्थायां भूतकाले साध्यावस्थायां वर्तमानकाले लक्ष्यवशाद् भवन्तीति परिभाष्यते । पेच्छइ पेच्छए प्रैक्षत प्रैक्षिष्ट प्रेक्षाञ्चक्रे वा । एतदेव वर्तमानोदाहरणम् ॥ १ ॥

# सिप्थासोः सि से ॥ २ ॥

सञ्जीवनी ।

परस्मैपदात्मनेपदयोः सिप्थास् इत्येतयोः प्रत्यययोः प्रत्येकं सि से इत्यादेशौ भवतः । तुमं जाणासि । तुमं जाणासे त्वं जानासि । ज्ञा अवबोधने

इत्यस्य ज्ञो जाणमुणाविति जाण आदेशः । तस्मात् परस्य सिपः सि से इत्यादेशौ । तुमं वेवसि तुमं वेवसे त्वं वेपसे । टुवेपृ कम्पने इत्यस्मात् परस्य थासः सि से इत्यादेशौ । शेषाणामदन्ततेति धातोरदन्तत्वम् ॥ २ ॥

सुबोधिनी ।

सिप्प्रत्ययस्य थास्प्रत्ययस्य च सि से इत्यादेशौ स्तः । जाणासि जाणासे जानासि । वेवसि वेवसे वेपसे ॥ २ ॥

## इण्मिपोर्मिः ॥ ३ ॥

सञ्जीवनी ।

आत्मनेपदपरस्मैपदयोरुत्तमपुरुषैकवचनयोः इण्-मिपोः प्रत्यययोः मिरादेशः । अहअं तुअरामि अहं त्वरे । ञित्वरा संवेगे इत्यस्मात् परस्य इटो मिरादेशः । त्वरस्तुवर इति तुवरादेशः । उत्तमपुरुषोपलक्षणत्वात् अत आ मिपि वेति मिकारेऽपि आत्वम् । अहं जंपामि अहं जल्पामि । जप जल्प अव्यक्तायां वाचि इत्यस्मात् परस्य मिपो मिरादेशः । जल्पेर्लो म इति लस्य मः शेषाणामदन्ततेति अदन्तता । पूर्ववदात्वम् । मिपो मि आदेशविधानं भणेमि करेमि

इत्यादौ लादेशे वेति एत्वार्थम् । 'क्वचिल्लेटां मिकारः स्यादिलोपोऽपि विकल्पतः' । अहअं हसं अहं हसामि । हसे हसने इत्यस्मात् परस्य मेरिकारलोपः । मो बिन्दुरित्यादिना बिन्दुः । पक्षे अहअं हसामि उभयत्रापि शेषाणामदन्ततेति धातोरदन्तत्वम् । अहं ण मरं अहं न म्रिये । मृङ् प्राणत्यागे इत्यस्मात् परस्येटो अनेन मिरादेशः । अन्त्येऽरः इति ऋकारस्य अरादेशः । पूर्ववद् बिन्दुः । पक्षे ण मरामि । अत आ मिपि वेत्यात्वम् ॥ ३ ॥

सुबोधिनी ।

इट् मिप् इत्येतयोः परयोर्मिरादिश्यते । तुवरामि त्वरे । जंपामि जल्पामि । मिपो मिआदेशविधानं भणेमि करेमि इत्यादौ लादेशे वेत्येत्वार्थम् । 'क्वचिल्लेटां मिकारः स्यादिलोपोऽपि विकल्पतः' । हसं हसामि । ण मरं ण मरामि न म्रिये ॥ ३ ॥

# न्तिहेत्थामोमुमा बहुषु ॥ ४ ॥

सञ्जीवनी ।

बहुष्वर्थेषु विहितानां परस्मैपदानां झि थ मस् इ- त्येतेषां आत्मनेपदानां च झ ध्वं महिङ् इत्येतेषां स्थाने न्ति ह इत्था मो मु म इत्येते षडादेशाः स्थान्या-

देशतया प्रवर्तन्ते। तत्र च

स्मृतो न्ति ञ्झिज्झयोः स्थाने ह इत्था चेति थध्वमोः
मोमुमा मस्महिङोश्च न्त इत्यपि च झस्य झेः॥

ञ्झिज्झयोः—पढन्ति पढन्ते। पठ व्यक्तायां वाचीत्यस्मात् परस्य परस्मैपदबहुवचनस्य झेः न्ति न्ते इत्यादेशौ भवतः। लहन्ति लहन्ते डुलभष् प्राप्तौ इत्यस्मात् आत्मनेपदबहुवचनस्य झस्य न्ति न्ते इत्यादेशौ पूर्ववदन्तता। खघथादिना भस्य हः। तुज्झे भरह तुज्झे भरित्था यूयं स्मरध्वम्। स्मृ चिन्तायामित्यस्मात् परस्य थस्य ह इत्था इत्यादेशौ। स्मरतेर्भरसुमरौ इति भरादेशः। सन्धावचामित्यादिना क्वचिदपि लोप इति वाऽकारलोपः। तुज्झे जुज्झह। तुज्झे जुज्झित्था यूयं युध्यध्वम्। युधि संप्रहारे इत्यस्मात् आत्मनेपदमध्यमपुरुषबहुवचनस्य ध्वमो ह इत्था इत्यादेशौ। आदेर्यो ज इति जः। युधि बुधि गृधि सिधि क्रुधां ज्झ इति कृतद्वित्वो ज्झ आदेशः। अम्हे बीहामो अम्हे बीहामु अम्हे बीहाम वयं बिभिमः बिभीमो वा। ञिभी भये इत्यस्मात् परस्य मसो मो मु म इति त्रय आदेशा भवन्ति। भियो भीबीहाविति बीहादेशः। तस्य इच्च बहुषु इत्यात्वम्। अम्हे वड्ढामो अम्हे वड्ढामु अम्हे वड्ढाम वयं वर्धामहे।

वृधु वृद्धौ इत्यस्मात् उत्तमपुरुषबहुवचनस्य महिङो मो मु म इत्येते त्रय आदेशाः। आदेः ऋकारस्य ऋतोऽदित्यत्वम्। वृधेर्ड्ढ इति धस्य कृतद्वित्वो ड्ढ आदेशः। 'इरे इत्यपि वादेशस्तिपो झेर्झस्य च स्मृतः'। सुसइरे सुहं शुष्यति सुखम्। शुष् शोषणे इत्यस्मात् परस्य तिपः इरे इत्यादेशः। शेषाणामदन्ततेति अदन्तत्वम्। शषोः स इति शस्यः सः। रुषादीनां दीर्घ इति दीर्घत्वं न भवति बहुलग्रहणात्। पहुव्विरे रिउणो प्रभवन्ति रिपवः। भू सत्तायामित्यस्मात् परस्य झेः इरे आदेशः। 'भुवः प्रादेः परस्य स्यादादेशो हुव्व इत्यपि'। इति हुव्व आदेशः। क्वचिदपि लोप इत्यलोपः। दूमइरे विरहिणो दूयन्ते विरहिणः। दूङ् परितापे इत्यस्मात् परस्य झस्य इरे आदेशः॥ ४॥

सुबोधिनी।

बहुष्वर्थेषु विहितानां झि थ मस् इत्येतेषां झ ध्वं महिङ् इत्येतेषां च स्थाने न्ति ह इत्था मो मु म इत्यादिश्यन्ते स्थान्यादेशतया प्रवर्तन्ते। तत्र च—

स्मृतो न्ति झिझयोः स्थाने ह इत्था वेति थध्वमोः।
मोमुमा मस्महिङोश्च न्त इत्यपि च झस्य झः॥

पढंति पढंते पठन्ति। लहंति लहन्ते लभन्ते। भवह भवित्था भवथ। जुज्झह जुज्झित्था युध्यध्वम्। वीहामो वीहामु

वीहाम बिभीमः विभिमः। वड्ढामो वड्ढामु वड्ढाम वर्धामहे। 'इवे इत्यपि वादेशः तिपो झेर्झस्य च स्मृतः'। सुसइवे शुष्यति। पहुव्विवे प्रभवन्ति। दूसइवे दूयन्ते॥ ४॥

# अत एसे॥ ५॥

सञ्जीवनी।

अदन्तनियमार्थोऽयं योगः। सिद्धे सत्यारम्भो नियमार्थ इति वचनात्। तेन ततिपोरिदेताविति इदेतौ सामान्येन विहितौ तयोर्मध्ये ए से इति तावादेशौ अकारान्तादेव भवत इति निगम्यते। करए करोति कुरुते वा। डुकृञ् करणे इत्यस्य कृञः कुण चेति ऋकारस्य अरादेशः। तस्मादुभयपदिनः परस्य त एकारादेशः। तुमं गेण्हसे त्वं गृह्णासि। गृह्णीषे वा। ग्रह उपादाने इत्यस्य ग्रहेर्गेण्ह इति गेण्ह आदेशः। अस्मादुभयपदिनः परस्य सिप्थासोरन्यतरस्य से इत्यादेशः। अत इति किम्? सो होइ तं होसि स भवति त्वं भवसि। भू सत्तायामित्यस्य भुवो हो हुवौ इति हो आदेशः। अस्मात् परयोः तिप्सिपोः क्रमेण इ सि इत्यादेशौ। सो भाइ। तं भासि। स बिभेति त्वं बिभेषि। ञिभी भये इत्यस्य भियो भावीहौ इति भाआदेशः 'अकारान्तान्नियम्येते त्तमाणौ

क्कापि पण्डितैः' । हुवन्ते भवन्ति । भुवो होहुवा-विति हुवादेशः । न्ते इत्यपि च झस्य झेरिति झप्रत्ययस्य च न्ते आदेशः। हुवमाणो भवन्। न्तमाणौ शतृशानचोरिति माणादेशः । अदन्तादिति किम् ? होन्ति भवन्ति । न्तिहेत्थेत्यादिना झेः न्तिरादेशः। क्कापीतिवचनात् इहैवानियमः । होमाणो भवन् ॥ ५ ॥

सुबोधिनी ।

नियमार्थविधिरयम् । सिद्धे सत्यारम्भो नियमार्थ इति वचनात् । ततिपोर्य ए इत्यादेशः सिप्थासोश्च यः से इत्यादेशः सामान्येन विहितौ तौ अकारान्तादेव भवतः । उदाहरणमुक्तम् । प्रत्युदाहरणं तु होइ भवति । होसि भवसि । 'अकारान्तान्निय-म्येते न्तमाणौ क्कापि पण्डितैः' । हुवंते भवन्ति । हुवमाणो भवन् । अकारान्तादिति किम् ? होन्ति भवन्ति । क्कापीति वचनात् इहैवानियमः । होमाणो भवन् ॥ ५ ॥

## अस्तेर्लोपः ॥ ६ ॥

सञ्जीवनी ।

तिङ्विधेर्द्वितीयसूत्रात् लक्ष्यवशादनुवर्तते । अस् भुवीत्यस्य तिबादिप्रत्ययेषु लक्ष्यवशात् लोपो भवति । सर्वत्र न भवतीत्यर्थः । तुमं सि । पुत्तो सि

त्वमसि पुत्रोऽसि । सिप्थासोः सि से इति सिपः सिरादेशः । लक्ष्यवशात् किम् ? इह मा भूत् । अत्थि अस्ति । तिपि सिद्धस्य स्तस्य थ इति थः । तस्य द्वित्वे वर्गे युज पूर्व इति तः । संति सन्त्येव । अत्र झिप्रत्ययस्य न्तिहेत्थेत्यादिना न्तिरादेशः । अडादेशा बहुलमित्यकारलोपः । शेषाणामदन्ततेति अदन्तत्वम् ॥ ६ ॥

सुबोधिनी ।

तिबादौ परे अस्धातोर्लोपः स्यात् । तुमं सि । त्वमसि । पुत्तो सि पुत्रोऽसि । अत्र परिभाषासूत्रात् लक्ष्यवशादित्यनुवर्तते तेनेह मा भूत् । अत्थि अस्ति । संति सन्त्येव ॥ ६ ॥

# मिमोमुमानामधो हश्च ॥७॥

सञ्जीवनी ।

अस्तेर्लोप इत्यनुवर्तते । इणिमपोर्मिरिति मिरादेशः । न्तिहेत्था मोमुमा बहुषु इति मसो मोमुमा आदेशाः । तेषामधो हकारः प्रयोज्यः । अस् भुवीत्यस्य च लोपः । आणत्त म्हि आज्ञप्तोऽस्मि । आणत्त म्हो आणत्त म्ह आज्ञप्ताः स्म । सन्ध्यावचामित्यादिना आणत्त इत्यत्र ह्रस्वः ॥ ७ ॥

सुबोधिनी ।

अस्तेः सम्बन्धिनां मि मोमु म इत्यादेशानां मध्ये हकारः प्रयोज्यः । चकार उक्तस्य धातुलोपस्य समुच्चयार्थः । आणत्त म्हि आज्ञप्तोऽस्मि । आणत्त म्हो आणत्त म्ह आज्ञप्ताः स्मः ॥७॥

# यक इअइज्जौ ॥ ८ ॥

सञ्जीवनी ।

संस्कृतशब्दानुशासनैः भावकर्मणोरर्थयोः आर्धधातुकसार्वधातुकयोर्मध्ये विहितो यो यक् तस्य इअ इज्ज इत्यादेशौ भवतः । णच्चिअइ णच्चिज्जइ णच्चिज्जए नृत्यते । नृती गात्रविक्षेपे इत्यस्मात् भावार्थोत्पन्नस्य यक्प्रत्ययस्य इअ इज्ज इत्यादेशौ । च्चो व्रजिनृत्योरिति तकारस्य च आदेशः । तस्य सन्धावचामित्यादिना क्वचिदपि लोप इत्यादिना वा अकारलोपः । ततिपोरिदेताविति पूर्वसूत्रमनुवर्तते । तेन तप्रत्ययस्य इ ए इत्यादेशौ । एवं गाइअइ गाइअए गाइज्जइ गाइज्जए मए । गीयते मया । कै गै शब्दे इत्यस्मात् कर्मणि उत्पन्नस्य यकः इअ इज्जौ । अडादेशा बहुलमिति एकारस्यात्वम् ॥ ८ ॥

सुबोधिनी ।

भावकर्मणोरर्थयोर्विहितसार्वधातुकार्धातुकयोर्मध्ये विहितो

यो यक्प्रत्ययस्तस्य इअ इज्ज इत्यादेशौ स्तः। भावे—णाच्चिअइ णाच्चिअए णच्चिज्जइ णच्चिज्जए नृत्यते। कर्मणि—गाइअइ गाइअए गाइज्जइ गाइज्जए गीयते॥ ८॥

# नान्त्यद्वित्वे॥ ८॥

सञ्जीवनी।

पूर्वसूत्रमनुवर्तते। शकादीनां द्वित्वमित्यादिना भावकर्मणोरर्थयोः यदन्त्यवर्णस्य द्वित्वं तस्मिन् सति इअ इज्ज इत्यादेशौ न भवतः। द्वित्वेनैव यगर्थस्य प्रतीयमानत्वात्। उक्तार्थानामप्रयोग इति वचनात् तद्योगे न वर्तते इत्यर्थः। सक्कइ मए शक्यते मया। शक् शक्तौ इत्यस्मात् ततिपोरिदेताविति तप्रत्ययस्य इ ए आदेशौ। शकादीनां द्वित्वमिति ककारस्य द्वित्वम्। शेषाणामदन्ततेति अदन्तत्वम्। गम्मइ गामो गम्मए गामो गम्यते ग्रामः। गमादीनां चेति द्वित्वम्। सुप्पइ तीए सुप्यते तया। पूर्ववत् द्वित्वम्। अडादेशा बहुलमिति वस्य उत्वम्। लब्भइ सिविणो। लभ्यते स्वप्नः। डुलभष् प्राप्तौ इत्यस्य गमादीनां चेति द्वित्वे वर्गे युजः पूर्व इति बः। अयं योगो विभज्यते। तेन यथादर्शनमन्यत्रापि प्रयो-

ऽभावः । हीरइ कीरइ ह्रियते क्रियते । हृञ्कृञोर्हीरकीरावितिं हीरकीरादेशौ ॥ ९ ॥

सुबोधिनी ।

शकादीनामित्यादिना भावकर्मणोरर्थयोर्यदन्त्यवर्णस्य द्वित्वं तस्मिन् सति यक इअ इज्ज इत्यादेशौ न स्तः । अयमर्थो द्वित्वेनैव यगर्थस्य प्रतीयमानत्वादुक्तार्थानामप्रयोग इति वचनात् तद्योगे च न भवति । क्व तदादेशे प्रसक्तिरिति सक्कइ सक्कए शक्यते । सुप्पइ सुप्पए सुप्यते । अयं योगो विभज्यते । तेन यथादर्शनमन्यत्रापि यकोऽभावः । हीरइ ह्रियते । कीरइ क्रियते ॥ ९ ॥

# न्तमाणौ शतृशानचोः ॥१०॥

सञ्जीवनी ।

शतृ शानच् इत्येतयोः प्रत्यययोरेकस्य न्त माण इत्यादेशौ भवतः ।कुप्पन्तो कुप्पमाणो कुप्यतीति कुप्यन् । कुप् क्रोधे इत्यस्मात् शतुः न्तमाणौ । शेषाणामदन्ततेति अदन्तत्वम् । शकादीनां द्वित्वमिति द्वित्वम् । खमन्तो खममाणो क्षमते इति क्षममाणः । क्षमुष् सहने इत्यस्मात् शानचो न्तमाणौ । ष्कक्षस्कां ख इति क्षस्य खः । अदन्तत्वं पूर्ववत् । सर्वत्र अत ओत्

सोरित्योत्वम् । क्वचिदपि लोप इत्यलोपः । 'लस्य क्रियातिपत्तौ वा न्तमाणावपि च क्वचित्' । जइ पढन्तो पंडिओ होन्तो । जइ पढमाणो पंडिओ होमाणो । यद्यपाठिष्यत् तदा पण्डितोऽभविष्यत् । पठ व्यक्तायां वाचीत्यस्य शेषाणामदन्ततेति अदन्तत्वम् । ठो ढ इति ढः । पक्षे जइ पढेज्ज पंडिओ होज्ज । 'क्रियातिपत्तिकालेऽपि ज्जज्जा वेति न्तमाणवत्' इति ज्ज ज्जा इत्यनयोरन्यतर आदेशः । लादेशे वेत्येत्वम् ॥ १० ॥

सुबोधिनी ।

शतृ शानच् इति प्रत्यययोः प्रत्येकं न्त माण इत्यादिश्येते । कुप्पन्तो कुप्पमाणो कुप्यन् । क्खमन्तो क्खममाणो क्षममाणः । 'लस्य क्रियातिपत्तौ वा न्तमाणावपि च क्वचित्' । जइ पढन्तो पण्डिओ होन्तो । जइ पढमाणो पण्डिओ होमाणो । यद्यपठिष्यत् पण्डितोऽभविष्यत् । पक्षे जइ पढेज्ज पण्डिओ होज्ज ॥१०॥

# ई च स्त्रियाम् ॥ ११ ॥

सञ्जीवनी ।

पूर्वसूत्रमनुवर्तते । स्त्रीलिंगे वाच्ये सति शतृशानचोरीकारादेशो भवति । चकारात् न्तमाणादेशा-

वपि । कुणई कुर्वन्ती कुर्वाणा । डुकृञ् करणे इत्यस्य कृञः कुण चेति कुण आदेशः । तस्मात् परस्य शतृशानचोरन्यतरस्य ईकारादेशः । एवं हरई हरन्ती ह्रियमाणा । आदीतौ बहुलमित्याप्रत्ययः ॥ ११ ॥

सुबोधिनी ।

स्त्रीलिंगे वाच्ये शतृशानचोरीकारादेशः स्यात् । चकारात् न्तमाणावपि । कुणई कुर्वन्ती कुर्वाणा । पक्षे कुणती कुणमाणा ॥ ११ ॥

## धातोर्भविष्यति हिः ॥ १२ ॥

सञ्जीवनी ।

भविष्यत्काले विहितेषु लकारेषु धातोर्हिर्विकरणो भवति । तथा चोक्तं भविष्यति लृट्, आशिषि लिङ्, अनद्यतने लुडिति । कातन्त्रेऽप्युक्तं भविष्यति भविष्यन्त्याशीश्च तिस्र इति । काहिइ करिष्यति क्रियात् कर्ता वा । करिष्यते कृषीष्ट कर्तैव वा । डुकृञ् करण इत्यस्योभयपदिनः कृञः का भूतभविष्यतोरिति कादेशः । अस्मात् परस्य लृटो लिङो लुटो वा सम्बन्धिनः प्रथमपुरुषैकवचनस्य तिप्तयोरन्यतरस्य ततिपोरिदेताविति इकारादेशः । काहिन्ति करिष्यन्ति क्रियासुः कर्तारो वा । करिष्यन्ते कृषीरन् कर्त्तार एव वा । अत्र झिझयोरन्यतरस्य

न्तिहेत्थेत्यादिना न्तिरादेशः। तं काहिसि त्वं करिष्यसि क्रियाः कर्त्तासि वा। त्वं करिष्यसे कृषीथा कर्त्तासे वा। अत्र सिप्थासोरन्यतरस्य सिप्थासोः सि से इति सिरादेशः। तुम्हे काहिह तुम्हे काहित्था यूयं करिष्यथ क्रियास्त कर्तास्थ वा यूयं करिष्यध्वं कृषीध्वं कर्ताध्वे वा। अत्र थध्वमोरन्यतरस्य न्तिहेत्थेत्यादिना ह इत्था इत्यादेशौ। काहित्थेत्यत्र सन्धाविकारलोपः ॥ १२ ॥

सुबोधिनी।

भविष्यत्काले विहितलकारेषु परेषु धातोर्हिकारविकरणो भवति। काहिइ। लृटि करिष्यति करिष्यते वा। आशीर्लिङि क्रियात् कृषीष्ट वा। लुङि कर्ता ॥ १२ ॥

# उत्तमे स्सा हा च ॥ १३ ॥

सञ्जीवनी।

पूर्वसूत्रमनुवर्तते। भविष्यत्कालविहितलृट् लिङ् लुट् इत्येतेषां सम्बन्धिनि उत्तमपुरुषे परे धातोः स्सा हा इत्येतौ विकरणौ भवतः। चकारात् हिकारोऽपि। अम्हे जाणिस्सामो अम्हे जाणिस्सामु अम्हे जाणिस्साम अम्हे जाणिहामो वयं ज्ञास्यामः ज्ञेयास्म

ज्ञातास्मो वा । वयं ज्ञास्यामहे ज्ञासीमहि ज्ञातास्महे । ज्ञा अवबोधने इत्यस्योभयपदिनो ज्ञो जाणमुणाविति जाणादेशः । तस्मात् परस्य मस्महिङोरन्यतरस्य न्तिहेत्थेत्यादिना मो मु म इति त्रय आदेशाः । एं च क्त्वेत्यादिना एत्वमित्वं वा ॥ १३ ॥

सुबोधिनी ।

भविष्यत्काले विहिते लृट्लिङ्लुटां सम्बन्धिन्युत्तमपुरुषे परे धातोः स्सा हा इति विकरणौ स्याताम् । चकाराद्धिरपि । जाणिस्सामो जाणिहामो जाणिहिमो जाणिस्सामु जाणिहामु जाणिहिमु जाणिस्साम जाणिहाम जाणिहिम ज्ञास्यामः ज्ञास्यामहे ज्ञेयास्म ज्ञासीमहि वा ज्ञातास्मः ज्ञातास्महे वा ॥ १३ ॥

# मिना स्सं वा ॥ १४ ॥

सञ्जीवनी ।

भविष्यतीत्यनुवर्तते । उत्तरेषु सूत्रेषु भविष्यति काले विहितानां लृट् लिङ् लुट् इत्येतेषां सम्बन्धिनोः इण्मिपोर्मिरादेशः तेन सह धातोः स्सं इति विकरणो भवति वा । धातोर्भविष्यतीति हिः । उत्तमे स्सा हा इति त्रयः प्राप्ताः । अहं चिणिस्सं । पक्षे हं चिणिहिमि हं चिणिस्सामि हं चिणिहामि अहं चेष्यामि

चीयासम् चेतास्मि वा, अहं चेष्ये चेषीय चेताहे वा । चिञ् चयने इत्यस्योभयपादिनः चिञश्चिण इति चिणादेशः । अस्मात् परयोरिणिमपोरन्यतरस्य इणिमपोर्मिः इति मिरादेशः । तेन सह एकत्र स्सं इति विकरणः । ए च क्त्वेत्यादिना धातोरेत्वमित्वं वा । ननु मेरिति स्थानित्वेनैव निर्दिश्यतां किं सहभावेन ? असदेतत् । आदेशे हि कृते विकरणान्तराणि प्रवर्तेरन् ततश्च चिणाहिस्सं इत्याद्यनिष्टं संपद्येत सहभाविनि विकरणविधौ नास्त्येष दोषः ॥ १४ ॥

सुबोधिनी ।

भविष्यत्काले विहिते मिना इणमिपोर्यो मिस्तेन मिकारेण सह धातोः स्सं इति विकरणः स्याद्वा । पक्षे हिस्साहादिविकरणः । चिणिस्सं चिणिहिमि चिणिस्साम चिणिहामि चेष्यामि चेष्ये वा, चीयासं चेषीय वा, चेतास्मि चेताहे वा ॥ १४ ॥

# मोमुमैर्हिस्सा हित्था ॥१५॥

सञ्जीवनी ।

वेत्यत्यनुवर्तते । भविष्यत्कालविहितयोः लृट् लिङ् लुट् इत्येतेषां सम्बन्धिनोः उत्तमपुरुषबहुवचनयोः मस्महिङोर्ये मो मु म इत्येते त्रय आदेशा भवन्ति

तैः सह धातोः हिस्सा हित्था इति विकरणौ वा भवतः । मोमुमानपास्य विकरणाववतिष्ठते । ईदृशेऽर्थे उत्तमे स्सा हा चेति स्सा हा इत्येतावेव प्राप्तौ । अम्हे किणिहिस्सा अम्हे किणिहित्था वयं क्रेष्यामः क्रेयास्मः क्रेतास्मो वा, वयं क्रेष्यामहे क्रेषीमहि क्रेतास्महे वा । डुक्रीञ् द्रव्यविनिमये इत्यस्योपदिनः । वा विकल्पपक्षे उत्तमे स्सा हा इत्येतत्सूत्रोदाहरणान्येव । 'लृटो यन्मध्यमैकत्वे हित्था तेन समं कृञः' । काहित्था करिष्यसि करिष्यसे वा । डुकृञ् करणे इत्यस्य कृञः का भूतभविष्यतोरिति 'कादेशः । तस्मात् परयोः सिप्थासोरन्यतरस्य सिप्थासोः सि से इति सिरादेशः । तेन सह हित्थाविकरणः ॥१९॥

## सुबोधिनी ।

भविष्यत्काले वर्तमानैः मसूमहिङोरादेशैर्मो मु म इत्येतैः सह धातोर्हिस्सा हित्थाविति विकरणौ स्यातां वा । किणिहित्था क्रेष्यामः क्रेष्यामहे वा क्रेयास्मः क्रेषीमहि वा क्रेतास्मः क्रेतास्महे वा । पक्षे किणिहिमो किणिस्सामो किणिहामो इत्यादि । 'लृटो यन्मध्यमैकत्वं हित्था तेन समं कृञः' । काहित्था करिष्यसि करिष्यसे वा ॥ १९ ॥

**कृदाश्रुवाचिगमिरुदिदृशि-रूपाणां काहं दाहं सोच्छं वोच्छं गच्छं रोच्छं दच्छं ॥१६॥**

सञ्जीवनी ।

उत्तम इति नदीस्रोतोन्यायेन अनुवर्त्तते । एकवचन इति निपातसामर्थ्यात् लभ्यते । रूपं प्रकारः । डुकृञ् करणे इत्यादयोऽत्र ये सप्त धातवो निर्दिष्टाः तत्सदृशानां भविष्यदुत्तमपुरुषे स्थितानां सम्बन्धिनः पदस्य यथासंख्यं काहं इत्यादय आदेशा निपात्यन्ते । काहं करिष्यामि । दाहं दास्यामि । सोच्छं श्रोष्यामि । श्रु श्रवणे । वोच्छं वक्ष्यामि । वच् भाषणे । गच्छं गमिष्यामि गम्लृ गतौ । रोच्छं रुदिष्यामि । रुदिर् अश्रुविमोचने । दच्छं प्रेक्ष्यामि । दृशिर् प्रेक्षणे । 'रूपशब्दस्य सादृश्यादन्येऽन्येषां निपातिताः' । यथा मोच्छं मोक्ष्यामि । मुचॢ मोचने । छेच्छं छेत्स्यामि । छिदिर् द्वैधीकरणे । भोच्छं भोक्ष्ये । भुज् पालना-भ्यवहारयोः । विच्छं वेदिष्यामि । विद् ज्ञाने । इत्यादयोऽन्येऽपि । लिङ्लुटोरप्येते प्रयोगाः द्रष्टव्याः ॥ १६ ॥

सुबोधिनी ।

उत्तमपुरुष इति नदीस्रोतोन्यायादनुवर्त्तत एव । एकवचन इति निपातसामर्थ्याल्लभ्यते। डुकृञ् करण इत्यादयोऽत्र ये धातवो निर्दिष्टास्तद्रूपाणां तत्सदृशानां भविष्यति उत्तमपुरुषे स्थितानां संबन्धिनः पदस्य यथासंख्यं काहमित्यादय आदेशाः स्युः । कृञ् काहं करिष्यामि । दाञ दाहं दास्यामि श्रु सोच्छं श्रोष्यामि। वच। वोच्छं वक्ष्यामि । गम्लृ गच्छं गमिष्यामि । रुदि रोच्छं रोदिष्यामि । दृशि दच्छं द्रक्ष्यामि । 'रूपशब्दस्य सादृशादन्येऽन्येषां निपातिताः' । मोच्छं मोक्ष्यामि । छेच्छं छेत्स्यामि । भोच्छं भोक्ष्यामि । विच्छं वेदिष्यामि । इत्यादयः । लिङ्लुटोरप्यत एव प्रयोगा द्रष्टव्याः ॥ १६ ॥

# श्वादीनां त्रिष्वनुस्वारवर्जं हिलोपश्च वा ॥१७॥

सञ्जीवनी ।

वर्ज्यते इति वर्जः । अनुस्वारो वर्जः यस्मिन् तत् अनुस्वारवर्जम् । अनुस्वारवर्जमिति क्रियावि- शेषणम् । पूर्वसूत्रोक्तक्रमेण श्रु इत्यादीनां श्रुवचिगमि- रुदिदृशीनां त्रिषु प्रथममध्यमोत्तमपुरुषेषु यथाक्रमं

पूर्वसूत्रोक्ता एवादेशा अनुस्वारवर्जं भवन्ति । त एवादेशा अबिन्दवो भविष्यन्तीत्यर्थः । तथा धातो र्भविष्यति हिः इति यो हिकारो विकरणो विहितः तस्य च लोपो भवति । एतेन धातोरेव अमी आदेशा न पदस्य इति पूर्वसूत्रप्रसक्तानिपातनाभावं दर्शयति । सोच्छिइ सोच्छिहिइ श्रोष्यति । शृणोतेः परस्य लृट्प्रथमपुरुषैकवचनं तिप् । तस्य च तनिपोरिदेताविति इकारादेशः । ए च क्त्वेत्यादिना प्रकृतेरेत्वमित्वं वा । अनेनैवाग्रिमोदाहरणेष्वपि एत्वमित्वं वावगन्तव्यम् । सोच्छिन्ति सोच्छिहिन्ति श्रोष्यन्ति । लृट्प्रथमपुषबहुवचनस्य न्तिहेत्थेत्यादिना न्तिरादेशः । सोच्छिसि सोच्छिहिसि श्रोष्यसि । अत्र लृट्सम्बन्धिनः सिपः सिप्थासोः सि से इति सिरादेशः । अत्र से आदेशो न भवति । अतः से इति नियमात् । सोच्छिह सोच्छिहिह सोच्छित्था सोच्छिहित्था श्रोष्यथ । अत्र लृट्सम्बन्धिनो मध्यमपुरुषबहुवचनस्य थस्य न्ति हेत्था मोमुमा बहुषु इति ह इत्था इत्यादेशौ । इत्था इत्यत्र सन्धावचामित्यादिना इकारलोपः । सोच्छिमो सोच्छिहिमो श्रोष्यामः । अत्र लृट्सम्बन्धिनो मसः न्तिहेत्थेत्यादिना मोमुमानामन्यतम आदेशः । एवं वच्यादीनां वोच्छाद्यादेशेष्वप्यु-

दाहार्यम् । विध्याद्यर्थेषु लिङ्लुटोरप्येत एव प्रयोगाः । अर्थे परं विशेषः ॥ १७ ॥

सुबोधिनी ।

श्रु वचि गमि रुदि दृशीनां त्रिषु प्रथममध्यमोत्तमपुरुषेषु पूर्वसूत्रोक्ता एवादेशा अनुस्वारवर्जं भवन्ति । तथा धातोर्यो हि-विकरणस्तस्य वा लोपो भवति । एतेन धातोरेवामी आदेशा न पदस्येति पूर्वसूत्रेण न प्रसक्तनिपातना । सोच्छिइ . सोच्छिहिइ श्रोष्यति । एवं पुरुषांतरेपि वच्यादीनामुदाहरणान्युन्नेयानि । लिङ्लुटोरपि एत एव प्रयोगा द्रष्टव्याः ॥ १७ ॥

# उ सु मु विध्यादिष्वेकस्मिन् ॥ १८ ॥

सञ्जीवनी ।

उ सु मु इति लुप्तप्रथमाबहुवचनान्तम् । त्रिष्वित्यनुवर्तमानमर्थवशात् विभक्तिपरिणाम इति वचनात् षष्ठ्यन्तं जायते । विधिरादिर्येषां ते विध्यादयः । विधिनिमन्त्रणामन्त्रणाभीष्टसंप्रश्नप्रार्थनाख्याः पाणिन्यादिपरिगृहीताः । एष्वर्थेषु त्रयाणां प्रथममध्यमोत्तमपुरुषेष्वेकत्वे उत्पन्नानां लोटो लिङो वा सम्बन्धिनो तिप् सिप् मिप् त थास् इट् इत्येतेषां च-

यथासंख्यं उ सु मु इत्येते त्रय आदेशा भवन्ति। उक्तं च–विधौ लोट् लिङ् च। कातन्त्रेऽप्युक्तं विध्यादिषु पञ्चमी सप्तमी च। ततिपोरिदेताविति सिप्थासोः सि से इति इण्मिपोर्मिरित्येतेषां आदेशानां बाधः। कुणउ करोतु कुरुतां वा। कुर्यात् कुर्वीत वा। डुकृञ् करणे इत्यस्य कृञः कुण चेति कुण आदेशः। अस्मात् परस्य लोटो लिङो वा सम्बन्धिनस्ततिपोरन्यतरस्य उकारादेशः। तुमं कुणसु त्वं कुरु कुर्याः कुरुष्व कुर्वीथा वा। अत्र सिप्थासो-रन्यतरस्य सुरादेशः। हं कुणमु अहं करवाणि करवै वा। अहं कुर्यां कुर्वीय वा। अत्र उत्तपुरुषैकवचनस्य इण्मिपोरन्यतरस्य मुरादेशः। 'विध्याद्यर्थेषु सिप्था-सोरश्चादेशो विधीयते'। तुमं भिन्द तुमं छिन्द। त्वं भिन्धि त्वं छिन्धि, त्वं भिन्द्याः त्वं छिन्द्याः। भिदिछिदोरन्तस्य न्दः इति न्द आदेशः। तस्य सिपो अकारादेशे कृते क्वचिदपि लोप इत्यलोपः। पक्षे तुमं छिंदसु। एवं तुमं लह त्वं लभस्व लभेथा वा डुलभष् प्राप्तावित्यस्मात् परस्य थासो अकारादेशः। खघथादिना भस्य हः। पक्षे लहसु। 'विध्यादौ प्रथमैकत्वे शौरसेन्यां दुरिष्यते'। एदु एदु पिअसही। एतु एतु प्रियसखी इयात् वा। इण् गतावित्यस्य

अडादेशा बहुलमिति एत्वम् । पअट्टदु अज्जो । प्रवर्ततामार्यः प्रवर्तेत वा । प्रपूर्वस्य वृतु वर्तने इत्यस्य र्तस्य टः इति टः । शेषादेशादिना द्वित्वम् । कगचादिना च वकारस्य लोपः ॥ १८ ॥

सुबोधिनी ।

विध्याद्यर्थेषु त्रयाणां पुरुषाणां एकत्वे उत्पन्नानां लोटो लिङश्च सम्बन्धिनां तिप्सिप्मिपां तथाम्इटां च यथाक्रमं उ सु मु इत्येते आदेशाः स्युः । कुणउ करोतु कुरुतां वा, कुर्यात् कुर्वीत वा । कुणसु कुरु कुरुष्व कुर्याः कुर्वीथाः वा । कुणमु करवाणि करवै वा, कुर्यां कुर्वीय वा । 'विध्याद्यर्थेषु सिप्थासोरश्चादेशो विधीयते'। भिन्द भिन्दसु भिन्धि भिन्द्या वा । लह लहसु लभस्व लभेथा वा । 'विध्यादौ प्रथमैकत्वे शौरसेन्यां दुरिष्यते'। एदु एदु पिअसही एतु एतु प्रियसखी इत्यादि ॥ १८ ॥

# न्तुहमो बहुषु ॥ १९ ॥

सञ्जीवनी ।

विध्यादिष्वित्यनुवर्तते । न्तु ह मो इति लुप्तप्रथमावचनान्तम् । पूर्वसूत्रव्याख्यानेषु विध्याद्यर्थेषु त्रयाणां प्रथममध्यमोत्तमपुरुषाणां बहुत्वे उत्पन्नानां

लोटः पञ्चम्या लिङः सप्तम्याः सम्बन्धिनां परस्मैपदानां झिथमसां आत्मनेपदानां झध्वंमहिङां यथासंख्यं न्तु ह मो इत्येते त्रय आदेशा भवन्ति । न्तिहेत्था-मोमुमा बहुष्वित्यस्यापवादः । परस्मैपदानां तावत्–तूसन्तु तुष्यन्तु तुष्येयुर्वा । तुष तुष्टौ । शेषाणामदन्त-तेत्यदन्तत्वम् । रुषादीनां दीर्घ इति दीर्घः । एवं तुम्हे तूसह यूयं तुष्यत तुष्येत वा । अम्हे तूसामो वयं तुष्याम तुष्येम वा । इच्च बहुषु इति आत्वमित्वं वा । आत्मनेपदानां–विसन्तु ग्रसन्तां ग्रसेरन् वा । ग्रसु ग्लसु अदने इत्यस्य ग्रसेर्विस इति विस आदेशः । एवं तुम्हे विसह यूयं ग्रसध्वम् ग्रसेध्वम् वा । अम्हे विसिमो वयं ग्रसामहे ग्रसेमहि वा । इच्च बहुषु इति आत्वमित्वं वा ॥ १९ ॥

सुबोधिनी ।

विध्याद्यर्थेषु त्रयाणां पुरुषाणां बहुत्वर्थेषूत्पन्नानां लिङो लोटो वा सम्बन्धिनां झिथमसां झध्वंमहिङां च यथासंख्यं न्तु ह मो इत्यादिश्यन्ते । तूसन्तु तुष्यंतु तूष्येयुर्वा । तूसह तुष्यत तुष्येत वा । तूसामो तुष्याम तुष्येम वा । तङि–विसन्तु ग्रसतां ग्रसेरन् वा । विसह ग्रसध्वं ग्रसेध्वं वा । विसिमो ग्रसामहे ग्रसेमहि वा ॥ १९ ॥

# वर्तमानभविष्यदनद्यतनयोश्च ज्ज ज्जा वा ॥ २० ॥

सञ्जीवनी।

एकस्मिन् बहुष्विति द्वयमनुवर्तते। विध्यादिष्विति च। भविष्यदनद्यतनश्चेति भविष्यदनद्यतनः। ततो द्वन्द्वः। वर्तमाने उत्पन्नस्य लटः भविष्यदनद्यतने उत्पन्नस्य लुटः तथा विध्याद्यर्थेषूत्पन्नस्य लोटः पञ्चम्याः लिङो वा सप्तम्याः सम्बन्धिनां सर्वेषु वचनेषु ज्जज्जावित्येतावादेशौ भवतः। ततिपोरिदेतौ इत्यादिना इदादय एव प्राप्ताः। एसो मुणेज्ज एसो मुणेज्जा। एष जानाति जानीते वा। ज्ञा अवबोधने इत्यस्य ज्ञो जाणमुणाविति मुणादेशः। लादेशे वेत्यकारस्य एत्वं वा। पक्षे एसो मुणइ। ततिपोरिदेताविति ततिपोरन्यतरस्य इदेतोरन्यतर आदेशः। अहं मुणेज्ज मुणेज्जा अहं जानामि जाने वा। एदे मुणेज्ज एदे मुणेज्जा। एते जानन्ति जानते वा। पक्षे एदे मुणन्ति। न्तिहेत्थेत्यादिना झिझयोरन्यतरस्य न्तिरादेशः। तुमं मुणेज्ज तुमं मुणेज्जा। त्वं जानासि जानीषे वा। पक्षे तुमं मुणासि। सिप्थासोः सि से इति सिप्थासोरन्यतरस्य सिरादेशः। तुम्हे मुणेज्ज

तुम्हे सुणेज्ज यूयं जानीथ जानीध्वे वा। पक्षे तुम्हे सुणह। न्तिहेत्थेत्यादिना थध्वमोरन्यतरस्य ह इत्था इत्येतयोरन्यतर आदेशः। अहं सुणेज्ज सुणेज्जा अहं जानामि जाने वा। पक्षे अहं सुणामि। इणिमपोर्मिरिति इणिमपोरन्यतरस्य मिरादेशः। अत आ मिपि वेत्यात्वम्। अम्हे सुणेज्ज अम्हे सुणेज्जा वयं जानीमः जानीमहे वा। पक्षे सुणिमो। न्तिहेत्थे- त्यादिना मस्महिङोरन्यतरस्य मोमुमानामन्यतम आदेशः। इच बहुषु इति इत्वमात्वं वा। भविष्यद- नद्यतने-एसो णच्चावेज्ज णच्चावेज्जा एष नर्तयिता नर्तयेत् वा। नृती गात्रविक्षेपे इत्यस्य णिजन्तस्याडुभयपदिनः ऋतोऽत् इति अत्वम्। त्तो व्रजिनृत्योरिति च्च आदेशः। तस्मात् परस्य णिचः आवे चेति आवे इत्यादेशः। सन्धावात्वम्। पक्षे णच्चावेहिइ। ततिपोरिदेताविति ततिपोरन्यतरस्य इत्वम्। धातोर्भविष्यति हिः इति हिविकरणः। एदे णच्चावेज्ज एदे णच्चावेज्जा एते नर्तयितारः नर्तयितार एव वा। पक्षे णच्चावेहिन्ति। न्तिहेत्थे- त्यादिना झिझप्रत्यययोरन्यतरस्य न्तिरादेशः। तुमं णच्चावेज्ज तुमं णच्चावेज्जा। त्वं नर्तयितासि नर्तयितासे वा। पक्षे तुमं णच्चावेहिसि। तुज्झे ण-

च्चावेज्ज णच्चावेज्जा यूयं नर्तयितास्थ नर्तयिताध्वे वा। पक्षे तुज्झे णच्चावेहित्था। न्तिहेत्थेत्यादिना थध्वमोरन्यतरस्य ह इत्था इत्येतयोरन्यतर आदेशः। सन्धाविकारलोपः। हं णच्चावेज्ज हं णच्चावेज्जा अहं नर्तयितास्मि नर्तयिताहे वा। पक्षे हं णच्चावेस्सं इणूमिपोर्मिरिति इणूमिपोरन्यतरस्य मिरादेशः। मिना स्सं वेति मिकारेण सह स्सं इति विकरणः। अम्हे णच्चावेज्ज णच्चावेज्जा वयं नर्तयितास्मः नर्तयितास्महे वा। पक्षे अम्हे णच्चावेहिस्सा। न्तिहेत्थेत्यादिना मस्महिङोरन्यतरस्य मोमुमानामन्यतम आदेशः। मोमुमैर्हिस्सा हित्था चेति उत्तमे स्सा हा वेति चतुर्णामन्यतमो विकरणः। भविष्यदनद्यतने किम्? भविष्यत्सामान्यस्य लृटो भविष्यन्त्या मा भूत्। तेनेह ज्ज ज्जा इत्यादेशौ न भवतः। णच्चावेहिइ णच्चावेहिन्ति नर्तयिष्यति नर्तयिष्यन्ति इत्यादि। विध्यादौः—सो कुणेज्ज स करोतु कुरुतां वा कुर्यात् कुर्वीत वा। डुकृञ् करणे इत्यस्य कृञः कुण चेति कुण आदेशः। लादेशे वेति एत्वम्। पक्षे कुणउ। उ सु मु विध्यादिष्वेकास्मिन्निति तातिपोरन्यतरस्य उ आदेशः। तुमं कुणेज्ज कुणेज्जा। कुरु कुरुष्व कुर्याः कुर्वीथा वा। पक्षे तुमं कुणसु। उ सु मु विध्यादिष्वेकास्मिन्

इति सिप्थासोरन्यतरस्य सुरादेशः । तुम्हे कुणेज्ज कुणेज्जा । यूयं कुरुत कुरुध्वं वा । कुर्यात् कुर्वीध्वं वा । पक्षे तुम्हे कुणह । न्तिहेत्थेत्यादिना धध्वमोरन्यतरस्य ह आदेशः । अहं कुणेज्ज कुणेज्जा । अहं करवाणि करवै वा । अहं कुर्यां कुर्वीय वा । पक्षे अहं कुणामु । उ सु मु विध्यादिष्वेकस्मिन्निति मिबिटोरेकस्य सुरादेशः । अत आ मिपि वेत्यात्वम् । अम्हे कुणेज्ज कुणेज्जा । वयं करवाम करामहे वा कुर्याम कुर्वीमहि वा । पक्षे अम्हे कुणामो । न्तिहेत्थेत्यादिना मस्महिङोरन्यतरस्य मो इत्यादेशः । इच्च बहुषु इत्यात्वमित्वं वा । 'क्रियात्तिपात्तिकालेऽपि ज्जज्जा वेति न्तमाणवत्' । जइ भुञ्जेज्ज भुञ्जेज्जा वा ता थिप्पेज्ज थिप्पेज्जा वा । यदाभोक्ष्यत् तदातृप्यत् । भुज पालनाभ्यवहारयोरित्यस्य भुञ्ज आदेशः । तस्य लादशे वेत्येत्वम् । तृप प्रीणने इत्यस्य तृपः थिप्प आदेशः । पक्षे जइ भुञ्जन्तो ता थिप्पन्तो । 'लस्य क्रियात्तिपत्तौ वा न्तमाणावपि वा क्वचित्' इति तप्रत्ययस्य न्तमाणयोरेक आदेशः। 'ज्जहि ज्जो चैव दृश्येते विध्यादिष्वपि वा क्वचित्' । कुणेज्जहि कुणेज्जो करोतु कुरुतां वा । कुर्यात् कुर्वीत वा । पूर्ववत् कृञः कुणादेशः । एत्वं च । एवं

सर्वेषु पुरुषेषु सर्वेषु वचनेषु एतावेव प्रयोगौ द्रष्टव्यौ। अर्थे परं भेदः । पक्षे कुणउ कुणन्तु एवमादयः। 'पक्षे हिश्च सह स्यातां धातूनां लृटि कर्म्मणि'। मए सो सुमरिज्जिहिइ मया स स्मारिष्यते । स्मरतेः भरसुमराविति सुमरादेशः। तस्मात् परस्य लृटि तकारस्य तातिपोरिदेताविति इकारादेशः । यक इअइज्जावित्यनयोरन्यतर आदेशः। तस्य च ए च क्त्वेत्यादिना ह्रस्वमेत्वं वा। अनेनैव अग्रिमोदाहरणेष्वपि ह्रस्वमेत्वं चावगन्तव्यम्। धातोर्भविष्यति हिरिति हिविकरणः । मए तुमं सुमिरिज्जिहिसि। मया त्वं स्मरिष्यसे। लृटि थासः सिप्थासोः सि से इति सिरादेशः । तुए हं सुमरिज्जाहिमि त्वया अहं स्मरिष्ये। लृटि इटः इपिमपोर्मिरिति मिरादेशः। मए एदे सुमरिज्जाहिन्ति। मया एते स्मारिष्यन्ते। लृटि झस्य न्तिहेत्थेत्यादिना न्तिरादेशः। मए तुम्हे सुमारिज्जिाहिह मया यूयं स्मारिष्यध्वम् । लृटि ध्वमः पूर्ववत् ह इत्था इत्यनयोरन्यतर आदेशः। तुए अम्हे सुमरिज्जिाहिमो त्वया वयं स्मारिष्यामहे। लृटः पूर्ववत् महिङो मोमुमानामन्यतम आदेशः॥२०॥

सुबोधिनी।

भविष्यच्च अनद्यतनश्च इति भविष्यदनद्यतनः। वर्तमाने

उत्पन्नस्य लटः भविष्यदनद्यतने चोत्पन्नस्य लुटो विध्यादिषूत्पन्नयोर्लोट्लिङोश्च सर्वत्र तिबादीनां ज्जं ज्जा इत्यादेशौ स्तः। सुणेज्ज सुणेज्जा सुणइ जानाति जानीते। णच्चावेज्ज णच्चावेज्जा णच्चावेहिइ नर्तयिता। कुणेज्ज कुणेज्जा कुणउ करोतु कुरुतां कुर्यात् कुर्वीत वा। एवं सर्वत्र॥ 'क्रियातिपत्तिकालेऽपि ज्ज-ज्जा वेति न्तमाणवत्'। जइ भुञ्जिज्ज ता थिप्पिज्ज जइ भुंजज्जा ता थिप्पिज्जा। यद्यभोक्ष्यत्तदाऽतृप्स्यत्। पक्षे जइ भुञ्जन्तो ता थिप्पन्तो। 'ज्जहि ज्जो चैव इत्येते विध्यादिषु च वा क्वचित्'। कुणज्जहि कुणज्जो करोतु कुरुतां वा कुर्यात् कुर्वीत वा। एवं सर्वपुरुषेषु एवं सर्ववचनेषु एतावेव प्रयोगौ॥ 'पक्षे हिश्च सह स्यातां धातूनां लृटि कर्मणि'। सुमरिज्जहि स्मरिष्यते। एवं पुरुषान्तरेषु वचनान्तरेषूह्यम्॥ २०॥

## मध्ये च॥ २१॥

सञ्जीवनी।

ससामग्रीकं पूर्वसूत्रमनुवर्तते। उत्तरत्र च। तेन वर्तमाने सम्प्रति काले भविष्यदनद्यतने श्वस्तने काले विध्यादिषु चार्थेषु सर्वेषु वचनेषु उत्पन्ना ये तिबादयः तेषां तेषां च धातूनां च यन्मध्यं तत्र ज्ज

ज्जा इत्येतौ द्विजकारकौ विकरणौ भवतो वा। पूर्वेण तिङामेव आदेशौ प्राप्तौ। वर्तमाने तावत्—सो देज्जइ सो देज्जाइ स ददाति दत्ते वा। डुदाञ् दाने इत्यस्मात् परे लटि ततिपोरन्यतरस्य ततिपोरिदेता-विति इकारादेशः। अडादेशा बहुलमिति आकारस्य एत्वम्। एवमग्रेऽपि। पक्षे सो देज्ज सो देज्जा विकरणादेशाभ्यामन्यत्-सो देइ। अथ तिप्त-योरिकारादेश एव। 'एकाचां झिझयोर्मध्ये ज्ज लक्ष्यवशाद् भवेत्'। यत्र ज्ज एव विकरणः-ते देज्जन्ति ते ददति ददते वा। विकरणादेशाभ्यामन्यत्र ते देन्ति। झिझयोः न्तिरेव। एवमुत्तममध्यमपुरुषयोरप्युदाहार्यम्। पक्षे तस्मात् परस्य लटि तिपः ततिपोरिदेताविति इ आदेशः।यत्र ज्जाविकरणः-सो होज्जा। भविष्यदनद्यतने-सो होज्जई सो होज्जाइ स भविता। भुवो हो हुवौ इति हो आदेशः। पक्षे सो देज्जाइ ददाति दत्ते वा। डुदाञ् दाने इत्यस्मात् परस्य लटि ततिपोरन्यतरस्य ततिपोरिदेतौ इति इकारः। विकरणादेशाभ्यामन्यत्र—होहिइ।अत्र धातोर्भविष्यति हिरिति हिविकरणः। एका-चामित्यादि। ते होज्जान्ति ते भवितारः। लुटि झेः न्तिहेत्थेत्यादिना न्तिरादेशः। अत्र ज्जा एव विकरणः।

पक्षे ते होज्ज ते होज्जा । विकरणादेशाभ्यामन्यत्र ते होहिन्ति । एवं मध्यमोत्तमपुरुषयोरपि । विध्यादिषु- एसो लेज्जाउ एसो लेज्जउ एष लातु लेयाद्वा । ला आदाने इत्यस्मात् परस्य लोटि लिङि वा तिपः उ सु मु विध्यादिष्वेकस्मिन्निति उकारादेशः । पक्षे एसो लेज्जा । विकरणादेशाभ्यामन्यत्र लाउ । तिपः उकारादेश एव । एकाचामित्यादि । एदे लेज्जन्तु एते लान्तु लेयुर्वा । अत्र लोटि लिङि वा झेः न्तुहमो बहुषु इति न्तुरादेशः । पक्षे एदे लेज्जा एदे लेज्ज । विकरणादे-शाभ्यामन्यत्र लेन्तु । अत्र झेः न्तुरादेशः । एवं मध्यमोत्तमयोरपि । उत्तरत्र अनेकाचः प्रतिषेधसा-मर्थ्यात् एकाच एव एतौ विकरणौ इति ॥ २१ ॥

सुबोधिनी ।

वर्तमानादिपूर्वोक्तार्थेषूत्पन्ना ये तिबादयस्तेषां धातूनां च मध्ये सर्वपुरुषेषु सर्ववचनेषु च ज्ज ज्जा इति विकरणौ वा स्तः । पूर्वसूत्रे तिबादीनमेव विहितम् । देज्जइ देज्जाइ ददाति पक्षे देज्ज देज्जा देइ । होज्जइ होज्ज होज्जा होहिइ भविता । लेज्जइ लेज्जाइ लेज्ज लेज्जा लेउ लातु लायाद्वा । एवमन्यत्राप्यूह्यम् ॥२१॥

# नानेकाचः ॥ २२ ॥

संजीवनी ।

वर्तमाने लटो भविष्यदनद्यतने लुटो विध्यादिषु च लोटो लिङो वा सम्बन्धिनः प्रत्ययस्य अनेकाचः अनेकस्वरस्य धातोर्यन्मध्यं तत्र ज्ज ज्जा इत्येतौ विकरणौ न स्तः । पूर्वेणाविशेषात् प्राप्तौ । घोलेज्ज घोलेज्जा घूर्णते । घूर्ण भ्रमणे इत्यस्य घूर्णघोल्लघुम्मौ इति घोल आदेशः । तस्मात् परस्य तप्रत्ययस्य वर्तमानभविष्यदादिना ज्ज ज्जा इत्यादेशौ । लादेशे वेत्येत्वम् । पक्षे घोलइ घोलए । ततिपोरिदेतौ इति तप्रत्ययस्य इदादेशः । इत्यादयो वर्तमानभविष्यदादिसूत्र एव विस्तरेण प्रतिपादितास्त एवानुसन्धेयाः । 'अनकाचोऽपि विध्यादौ ज्ज ज्जा मध्ये तिङां क्वचित्' । कुणेज्जसु कुणेज्जासु कुरु कुरुष्व वा कुर्याः कुर्वीथा वा । डुकृञ् करणे इत्यस्मात् परस्य लोटि लिङि वा सिप्थासोरन्यतरस्य उ सु मु विध्यादिष्वेकस्मिन्निति सुरादेशः । कृञः कुण चेति कुणादेशः । तस्य लादेशे वेत्येत्वम् ॥ २२ ॥

सुबोधिनी ।

अनेकाचो धातोस्तिवादीनां च मध्ये पूर्वसूत्रेण प्राप्तौ ज्ज ज्जा इति विकरणौ न स्तः । घोणेज्ज घोणेज्जा घोणइ घोणए घूर्णते । इत्यादि वर्तमानभविष्यदादिसूत्रोदाहरणं च संधेयम् ॥

'अनेकाचोऽपि विध्यादौ ज्ज ज्जा मध्ये तिङां क्वचित्'
कुणेज्जहु कुणेज्जासु कुरु कुरुष्व वा कुर्याः कुर्वीथा वा ॥२२॥

# ईअ भूते ॥ २३ ॥

सञ्जीवनी।

अनेकाच इत्यनुवर्तते। भूतेऽतीते काले उत्पन्नानां अनेकाचो धातोः परेषां तिङां स्थाने ईअ इत्यादेशो भवति। एकस्मिन् वहुष्वित्यनुवृत्तेः सर्वेषु पुरुषेषु सर्वेषु वचनेषु। भूत इति भूते लुङ् अद्यतनी, अनद्यतने लङ् ह्यस्तनी, परोक्षे लिट् परोक्षा इति। हुवीअ अभूत् अभवत् बभूव वा। भू सत्तायामित्यस्य भुवो होहुवाविति हुवादेशः। तस्य क्वचिदपि लोप इत्यलोपः। लहीअ अलब्ध अलभत लेभे वा। डुलभष् प्राप्तौ इत्यस्य क्षोषाणामदन्ततेति अदन्तत्वम्। पूर्ववत् अकारस्य लोपः। खघथादिना भस्य हः ॥ २३ ॥

सुबोधिनी।

अनेकाचो धातोः परेषां भूतार्थे वर्त्तमानानां लुङ्लङ्-लिट्संबन्धिनां तिबादीनां ईअ इत्यादिश्यते। हुवीअ अभूत् अभवत् बभूव वा। लहीअ अलब्ध अलभत लेभे वा ॥२३॥

# एकाचोहीअ ॥ २४ ॥

सञ्जीवनी ।

भूते इत्यनुवर्तते । उत्तरत्र च । एकाच एकस्वरस्य धातोर्भूतकाले लुङ् अद्यतनी, लङ् अनद्यतनी, लिट् परोक्षा एतत्सम्बन्धिनां तिङां हीअ इत्यादेशः स्यात् । सर्वेषु पुरुषेषु सर्वेषु वचनेषु । होहीअ अभूत् अभवत् बभूव वा । भू सत्तायामिति भुवो होहुवौ इति हो आदेशः । काहीअ अकार्षीत् अकृत वा अकरोत् अकुरुत वा चकार चक्रे वा । डुकृञ् करण इत्यस्य कृञः का भूतभाविष्यतोश्चेति कादेशः । 'स्यात्तिङां हीअ एकाचो वर्तमानेऽपि भूतवत्' । सोहीअ शृणोति । श्रु श्रवणे इत्यस्य ॥२४॥

सुबोधिनी ।

एकाचो धातोः परेषां भूतवर्तमानलकारसंबंधिनां तिङां हीअ इत्यादिश्यते । होहीअ अभूत् अभवत् बभूव वा । काहीअ अकार्षीत् अकरोत अकुरुत वा चकार चक्रे वा ॥२४॥

# आसिरस्तेः ॥ २५ ॥

सञ्जीवनी ।

असू भुवीत्यस्य धातोः भूते काले तिङा सह आसि इत्यादेशो निपात्यते । आसि राअणो अभूत् आसीत् बभूव वा रावणः । आसि रामलक्खणो । अभूतां आस्तां बभूवतुर्वा रामलक्ष्मणौ । द्विवचनस्य बहुवचनमिति तसो झिः । तेन सह आसि आदेशः । आसि रिक्खवाणररक्खसा अभूवन् अभवन् बभूवुः वा ऋक्षवानराक्षसाः ॥ २५ ॥

सुबोधिनी ।

असधातोस्तिङ्भिः सह भूतेऽर्थे आसि इति निपात्यते । आसि अभूत् आसीत् बभूव वा । अयमुत्तरत्र सर्वत्र प्रयोगः॥ २३॥

# णिचः एदादेरात् ॥ २६ ॥

सञ्जीवनी ।

धातोरित्येव । अन्यन्निवृत्तम् । णिच्प्रत्ययस्य एकारादेशः, धातोः सम्बन्धी य आदिस्तस्य आत्वम् । कारेइ कुर्वन्तं प्रयुङ्क्ते कारयति कारयते वा । हेतौ णिच् तस्य एत्वम् । कृञः कुण चेति ऋकारस्य अरादेशः । ततिपोरिदेताविति ततिप्प्रत्ययोरन्यतरस्य इत्वम् । एवं पाढेइ पठन्तं

प्रयुङ्क्ते पाठयति पाठयते वा । ठो ढ इति ढः ॥२६॥

सुबोधिनी ।

धातोः परस्य णिच्प्रत्ययस्य एकार आदिश्यते । धातोः संबंधी य आदिस्तस्य आत्वं च स्यात् । कारेइ कारयति ॥२६॥

## आवे वा ॥ २७ ॥

सञ्जीवनी ।

णिच इत्यनुवर्तते उत्तरसूत्रयोश्च । धातोः परस्य णिच्प्रत्ययस्य आवे इति वादेशो भवति । न केवलं पूर्वोक्त एव । करावेइ पढावेइ कारयति पाठयति । पूर्वसूत्रात् योगभेद आदेरनादेशार्थः ॥ २७ ॥

सुबोधिनी ।

धातोः परस्य णिच्प्रत्ययस्य आवे इति स्यात् । करावेइ कारयति । योगभेद आदेरनादेशार्थः ॥ २७ ॥

## आविः क्तभावकर्मसु वा ॥२८॥

सञ्जीवनी ।

क्तप्रत्यये भावे कर्मणि वार्थे णिचः स्थाने आवि-रादेशः स्यात् । पक्षे णिच एदादेरात् इति धातोरात्वं

भवति । ए आवे इत्येतौ पाक्षिकौ न भवतः । नैदावे इति प्रतिषेधस्य वक्ष्यमाणत्वात् । हसाविओ हासितः । हसे हसने इत्यस्य । पक्षे हासिओ । अत्र धातोरात्वमेव । एवं पढाविओ पाढिओ पाठितः । केचित्तु यत्र आविरादेशः तत्र लक्ष्यवशात् धातोरादेरात्वमिच्छन्ति । तेन हासाविओ पाढाविओ इत्यपि भवतीत्याहुः । भावकर्मणोः—चोराविअइ चोराविज्जइ चोर्यते । चुर स्तेये इत्यस्य । अडादेशा बहुलमित्यात्वम् । चिन्ताविअइ चिन्ताविज्जइ चिन्त्यते । चिति स्मृत्याम् । धाराविअइ धाराविज्जइ धार्यते । धृङ् अवस्थाने इत्यस्य अन्ते अर इति अरादेशः । भावे कर्मणि च लकारः । तस्य ततिपोरिदेताविति इत्वम् । भावकर्मणोरेव यक इअइज्जाविति इअ इज्ज इत्येतावादेशौ । सन्धावकारलोपः । पक्षे चोरिअइ चोरिज्जइ चिन्तिअइ चिन्तिज्जइ । धारिअइ धारिज्जइ । 'आहुरोत्वं णिचः स्थाने स्यादाविर्युगपद् क्वचित्' । तुराविअं तुरिअं । त्वर त्वरणे इत्यादयो यथालक्ष्यमनुसर्तव्याः॥ २८ ॥

सुबोधिनी ।

क्तप्रत्यये भावकर्मणि चार्थे णिच आविरादिश्यते वा । हसाविओ हासितः पक्षे हासिओ । केचितु आविआदेशपक्षेपि

आदेर्लक्ष्यवशादात्वं तेन हासाविओ इत्यपि प्रयोगो भवतीत्याहुः । भावे सुप्पावीअइ सुप्पाविज्जइ स्वाप्यते । पक्षे सुप्पिअइ । सुप्पिज्जइ । कर्मणि—चिन्ताविअइ । चिन्ताविज्जइ । चिन्त्यते । पक्षे चिन्तिअइ । चिंतिज्जइ । 'आहुरोत्वं णिचः स्थाने स्यादाविर्युगपत् क्वचित्' ॥ २८ ॥

# नैदावे ॥ २९ ॥

सञ्जीवनी ।

क्तभावकर्मस्वित्यनुवर्तते । एदावे इति लुप्तप्रथमाद्विवचनान्तम् । क्तप्रत्यये परे भावे कर्म्मणि चार्थे सति णिच ए आवे इत्यादेशौ न भवतः । अत्र णिच एदादेरात् इति पाक्षिकमादेरात्वम् । हसाविअइ हसाविज्जइ हास्यते । कर्मणि लकारः । तथैव यक् । तस्य यक इअइज्जाविति । इअ इज्जा इत्यादेशौ । पूर्वेण णिचः आविः । हासिअइ हासिज्जइ पूर्ववत् । पाक्षिकमात्वम् ॥ २९ ॥

सुबोधिनी ।

क्तप्रत्यये परे भावे कर्माणि च णिच ए आवे आदेशौ न स्तः । उक्तान्युदाहरणानि ॥ २९ ॥

# अत आ मिपि वा ॥ ३० ॥

सञ्जीवनी ।

मिविति उत्तमपुरुषोपलक्षणार्थं व्याख्यानात् । तथा चोक्तं भवति–'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमिति । उत्तरत्र बहुष्विति वचनात् एकत्वम् । येन विधिस्तदन्तस्येति वचनात् तदन्तविधिः । तेन अकारान्तस्य धातोरात्वं भवति उत्तमपुरुषैकवचने परे । लादेशे वेत्येत्वमेव प्राप्तम् । जाणामि जाणेमि जानामि जाने वा । ज्ञा अवबोधने इत्यस्य ज्ञा जाणमुणाविति जाणादेशः । तस्मादुत्तरस्य इणिमपोरन्यतरस्य इणिमपोर्मिरिति मिरादेशः । पक्षे लादेशे वेत्येत्वम् । एवं सहामि सहेमि सहे । सह मर्षणे इत्यस्य शेषाणादन्तत्वम् इत्यदन्तत्वम् । पूर्ववदन्यत् ॥ ३० ॥

सुबोधिनी ।

मिपा उत्तमपुरुषैकवचनमात्रमुपलक्षितम् । अतः अकारान्तस्य धातोरुत्तमपुरुषैकवचने आकारादेशो वा स्यात् । जाणामि जाणेमि । जाने जानामि ॥ ३० ॥

# इच्च बहुषु ॥ ३१ ॥

सञ्जीवनी।

पूर्वमत्रानुवर्तते। बहुषु अर्थेषु उत्पन्ने उत्तमपुरुषे परे अतोऽकारान्तस्य धातोराकारादेशो भवति। इकारादेशश्च भवति। णिअच्छामो णिअच्छिमो पश्यामः। दृशिर् प्रेक्षणे इत्यस्मात् परस्य मस्‍ः न्तिहेत्थेत्यादिना मोमुमानामन्यतम आदेशः। दृशेः पुलअणिअच्छ अवक्खसच्चवा इति चतुर्णामन्यतम आदेशः। लहामो लहिमो लभामहे। डुलभष् प्राप्तौ इत्यस्मात् परस्य महिङः पूर्ववत् मोमुमानामन्यतम आदेशः। शेषाणामदन्ततेति धातोरदन्तता। खघथा-दिना भस्य हः॥ ३१ ॥

सुबोधिनी।

बह्वर्थविहितोत्तमपुरुषे अत आत्वं इत्वं वा स्यात्। लहामो लहिमो लभामहे॥ ३१ ॥

# क्ते ॥ ३२ ॥

सञ्जीवनी।

अत इदिति द्वयमनुवर्तते। उत्तरत्र च। आ इ

इति निवृत्तम् । चानुकृष्टमुत्तरत्र नाभिसम्बध्यते इति वचनात्। तेनाकारान्तस्य धातोरिकारादेशो भवति क्तप्रत्यये परे। भरिअं स्मृतम् । स्मृ चिन्तायामित्यस्य स्मरतेर्भरसुमराविति भरसुमरयोरन्यतर आदेशः। खघथादिना भस्य हिः । कगचादिना अनचस्तस्य लोपः । नपुंसके सोर्बिन्दुरिति बिन्दुः । एवं जाणिअं ज्ञातम् । ज्ञो जाणमुणाविणि जाणमुणयोरन्यतर आदेशः । पढिअं पठितम् । पठ व्यक्तायां वाचीत्यस्य । शेषाणामदन्ततेति अदन्तत्वे सति अनेन इत्वम् । ठो ढ इति ढः ॥ ३२ ॥

सुबोधिनी ।

क्तप्रत्यये परे इत्वं स्यात् । पढिअं पठितम् ॥ ३२ ॥

# ए च क्त्वातुमुन्तव्यभविष्यत्सु ॥ ३३ ॥

सञ्जीवनी ।

भविष्यदिति भविष्यत्कालविहितः प्रत्ययो लृटादिर्गृह्यते । तेन क्त्वा तव्य तुमुन् इत्येतेषु भविष्यद्विहितेषु च प्रत्ययेषु अकारान्तस्य धातो

एकारादेशः स्यात् इकारादेशश्च । हरेऊण हरिऊण हृत्वा । हृञ् हरणे इत्यस्य अन्ते अर इति ऋकारस्य अरादेशः । क्त्वा तूण इति क्त्वाप्रत्ययस्य तूण आदेशः । तस्य कगचादिना तलोपः । हरेउं हरिउं हर्तुम् । अत्र तुमुनो मो बिन्दुरित्यादिना बिन्दुः । पूर्ववदन्यत् । हरेअव्वं हरिअव्वं हर्तव्यम् । तव्यप्रत्ययस्य अधो मनयामिति यलोपः । शेषादेशादिना वस्य द्वित्वम् । पूर्ववत् तलोपः । हरेहिइ हरिहिइ हरिष्यति हरिष्यते वा । भविष्यति लृटि भविष्यत्काले तिप्तप्रत्यययोरन्यतरस्य ततिपोरिदेताविति इत्वम् । एकारादेशोऽपि न भवति । अत ए से इति नियमात् । धातोर्भविष्यति हिरिति हिविकरणः । इत्यादयोऽन्येऽपि ॥ ३३ ॥

सुबोधिनी ।

भविष्यदित्यनेन तदर्थविहितो लृटादिर्गृह्यते । क्त्वादौ परे अत एत्वं इत्वं च स्यात् । हरेऊण हरिऊण हृत्वा । हरेउं हरिउं हर्त्तुम् । हरेअव्वं हरिअव्वं हर्तव्यम् । हरेहिइ हरिहिइ हरिष्यति हरिष्यते वा । इत्यादयो अन्येपि ॥ ३३ ॥

## लादेशे वा ॥ ३४ ॥

सञ्जीविनी ।

अत इत्यनुवर्तते । एदिति च । लस्य आदेशः लादेशः । तस्मिन् लकारादेशे परतः अकारान्तस्य धातोरेकारादेशो भवति वा । अप्राप्ते विकल्पः । हसेइ हसइ हसति । हसे हसने इत्यस्मात् तिपः ततिपोरिदेताविति इत्वम् । शेषाणामदन्ततेति अदन्तत्वे सत्यनेन वा एत्वम् । रमेइ रमइ रमते । रमु क्रीडायामित्यस्मात् तप्रत्ययस्य पूर्ववदित्वम् । खमेन्तो खमन्तो क्षममाणः । क्षमुष् सहने । आनश्प्रत्ययस्य न्तमाणौ शतृशानचोरिति न्त आदेशः । ष्कक्षस्कां ख इति क्षस्य खः । अत ओत् सोरिति ओत्वम् । वड्ढेन्ति वड्ढन्ति वर्धन्ते । वृधु वृद्धौ । न्तिहेत्थेत्यादिना झस्य न्तिरादेशः । न्त इत्यपि न भवति । 'अकारान्तात् नियम्येते न्तमाणौ क्वापि पण्डितैः' इति नियमात् । वृधेर्ड्ढ इति धस्य ड्ढः । ऋतोऽत् इत्यत्वम् । विरमेउ विरमउ विरमतु । विधौ लोडिति तिपः उ सु मु विध्यादिष्वेकस्मिन्निति उकारादेशः । पूर्ववद्धातोरदन्तत्वम् । एवं तुमं विरमेसु विरमसु त्वं विरम । अत्र मध्यमपुरुषैकवचनस्य लोटि सिपः पूर्ववत् सुरादेशः ॥ ३४ ॥

इति प्राकृतसञ्जीवन्यां तिङ्विधिः षष्ठः परिच्छेदः ।

सुबोधिनी ।

लकारादेशे धातोरतः एवा स्यात् । अप्राप्तविकल्पोऽयम् । रमेइ रमइ रमते ॥ ३४ ॥

वृत्तौ प्राकृतसूत्राणां श्रीसदानंदनिर्मितौ ।
परिच्छेदः सुबोधिन्यां षष्ठोऽयं तिङ्विधिर्गतः ॥

# अथ सप्तमः परिच्छेदः

## अथ धातुविधिरुच्यते

## भुवो होहुवौ ॥ १ ॥

सञ्जीवनी ।

भू सत्तायामित्यस्य धातोः हो हुव इत्यादेशौ भवतः । होइ भवति । ततिपोरिदेताविति तिपः इत्वम् । होन्ति हुवन्ति । न्तिहेत्थेत्यादिना झिप्रत्ययस्य न्तिरादेशः ॥ १ ॥

सुबोधिनी ।

भू सत्तायामिति धातोः हो हुव इत्यादेशौ स्तः । होइ हुवइ भवति ॥ १ ॥

## क्ते हू ॥ २ ॥

सञ्जीवनी ।

हू इति लुप्तप्रथमान्तम् । क्तप्रत्यये परे भूधातोः हू इति स्यात् । हूअं भूतम् । 'उपसर्गात् परस्यापि

भुवो हूरदुरुत्सम:' । अणुहूओ अनुभूतः । अहिहूओ अभिभूतः । 'अदुरुत्सम इति किम्? दुब्भुओ दुर्भूतः । संभुओ संभूतः । 'भूओ इति पिशाचे स्यात् तत्र क्ते हू भुवो नहि' । भूओ भूतः ॥ २ ॥

सुबोधिनी ।

क्तप्रत्यये परे भूधातोः हू इति स्यात् । हूअं भूतम् । 'उपसर्गात् परस्यापि भुवो हूरदुरुत्सम:' । परिहूअं परिभूतम् । अदुरुत्सम इति किम्? दुब्भुओ उब्भुओ संभुओ दुर्भूतः उद्भुतः संभुतः । 'भूओ इति पिशाचे स्यात् तत्र क्ते हूर्भुवो न हि' । भूओ भूतः पिशाचः ॥ २ ॥

# प्रादेर्भवः ॥ ३ ॥

सञ्जीवनी ।

प्रशब्दः आदिर्यस्य स प्रादिः । तस्मात् प्रादेः । प्राद्यः एवमादेर्व्याकरणप्रतिपादितात् उपसर्गगणात् परस्य भुवः भव इत्यादेशो भवति । होहुवयोर्बाधः । पहवेइ पहवइ प्रभवति । तातिपोरिदेताविति तिपः ए इ इत्यादेशौ भवतः । सर्वत्र लवरामिति रलोपः । खघथादिना भस्य हः । लादेशे वेत्यकारस्य वा एत्वम् । एवं पहवेन्ति पहवन्ति । न्तिहेत्थेत्यादिना झेः न्तिरा-

देशः। संभवेइ संभवइ संभवए संभवति। संभवेन्ति संभवन्ति संभवन्ति। 'न ह्रस्वं खघथादीनां परेषां बिन्दुतो भवेत्' इति ह्रस्वाभावः। एवं उपसर्गान्तरे अन्यत्राऽपि क्वापि। 'अप्रादेरपि तथा दृश्यते भवतेर्भवः'। भवेइ भवइ भवति। 'भुवः प्रादेः परस्य स्यादादेशो हुव्व इत्यपि'। पहुव्वइ पहुव्वए ॥ ३ ॥

सुबोधिनी।

प्रपरात्पुपसर्गादुत्तरस्य भुवो भव इत्यादिश्यते। पहवेइ पहवइ प्रभवति। एवमुपसर्गान्तरेऽपि। 'अप्रादेरपि तथा दृश्यते भवतेर्भवः'। भवेइ भवइ भवति। 'भुवः प्रादिपरस्य स्यादादेशो हुव्व इत्यपि'। पहुव्वइ पहुव्वेइ प्रभवति ॥ ३ ॥

# त्वरस्तुवरः ॥ ४ ॥

संजीवनी।

त्वर इति षष्ठ्यन्तम्। ञित्वरा संभ्रमे इत्यस्य धातोः तुवर इत्यादेशो भवति। तुमं तुवरसि तुमं तुवरेसि तुमं तुवरसे। सिप्थासोः सि से इत्यादेशौ। सिकारादेशविषये लादेशो वा एत्वम्। कथं तर्हि तुरिअं? तुर त्वरणे इत्यस्य। तूरिअं इत्यपि तस्य रुधादित्वात् दीर्घे सिद्धम् ॥ ४ ॥

सुबोधिनी ।

ञित्वरा संभ्रमे इत्यस्य धातोस्तुवर इत्यादिश्यते । तुवरेइ तुवरइ तुवरए त्वरते । कथं तर्हि तवरिअं इति ? त्वर त्वरण इत्यस्य धातोः ॥ ४ ॥

## घुर्णो घोलघुम्मौ ॥ ५ ॥

सञ्जीवनी ।

घुण घूर्ण भ्रमणे इत्यस्य घोल घुम्म इत्येतावादेशौ भवतः । घोलन्तो घोलमाणो घुम्मन्तो घुम्ममाणो घूर्णमानः । न्तमाणौ शतृशानचोरित्यादिना न्त माण इत्यादेशौ ॥ ५ ॥

सुबोधिनी ।

घुर्ण इत्यस्य घोण घुम्म इत्यादेशौ स्तः । घोणेइ घुम्मेइ घोणइ घुम्मइ घोणए घुम्मए घूर्णते ॥ ५ ॥

## नुदो णोल्लः ॥ ६ ॥

सञ्जीवनी ।

नुद प्रेरणे इत्यस्य णोल्ल इत्यादेशो भवति । पणोल्लिअं प्रणुन्नम् । क्ते इति इत्वम् ॥ ६ ॥

सुबोधिनी ।

तुद प्रेरणे इत्यस्य धातोः णोल्ल इत्यादिश्यते । णोल्लेइ णोल्लइ तुदति ॥ ६ ॥

## पटेः फालः ॥ ७ ॥

सञ्जीवनी ।

अट पट गतावित्यस्य पटतेः फाल आदेशो भवति । णिजन्तस्यास्य निर्देशात् न केवलस्यायमादेशः । फालेन्ति पाटयन्ति पाटयन्ते । णिच एदादेरात् इति णिचः एत्वम् । न्तिहेत्थेत्यादिना झिझयोरन्यतरस्य न्तिरादेशः । तुम्हे फालावेह । णिचः आवे आदेशः । न्तिहेत्थेत्यादिनाह आदेशः । फालाविअं पाटितम् । आविः क्तेत्यादिना णिचः आविरादेशः । कगचादिना तलोपः ॥ ७ ॥

सुबोधिनी ।

पट गताविति धातोः फाल इत्यादेशः स्यात् । फालेइ पाटयति ॥ ७ ॥

## वृषादीनामृतोऽरिः ॥ ८ ॥

संजीवनी।

वृष इत्यनेन सदृशाः वृषादयः। तेन वृष सेचने इत्येवंप्रकाराणां धातूनां सम्बन्धिनः ऋकारस्य अरिः आदेशो भवति। तेषां उपधाया ऋकारस्य अरिरादेशो दृश्यते इत्यर्थः। ऋतोऽत् इत्यस्य बाधः। ऋत इति वर्त्तत च। एस वरिसउ एस वरिसेउ एष वर्षतु। वरिसेऊण वर्षित्वा। हरिसिऊण हर्षित्वा। हृष् हृष्टौ इत्यस्य क्त्व तूण इति तूणादेशः। तस्य कगचादिना तलोपः। ए च क्त्वेत्यादिना एत्वं इत्वं वा। मरिसे-अव्वं मरिसिअव्वं मर्षितव्यम्। मृष तितिक्षाया-मिति तव्यप्रत्ययस्य अधो मनयामिति यलोपः। शेषादेशादिना द्वित्वम्। शेषं पूर्ववत्। करिसेइ करिसइ कर्षति। कृष विलेखने इत्यस्य पूर्ववत् अदन्तत्वम्। तस्य लादेशो वेति च एत्वम्। अथ कथं कर्षतीत्यस्य कड्ढ इति? उच्यते-एवमन्येऽपीति बहुलग्रहणात् पक्षे ड्ढादेशस्य प्रवृत्तेः। वृषादीनामिति किम्? णच्चइ णच्चइ नृत्यति। च्चो व्रजिनृत्योरिति च आदेशः। ऋकारस्य ऋतोऽत् इत्यत्वम्॥ ८॥

सुबोधिनी।

वृष सेचन इत्यादिधातूनां सम्बन्धिन उपधाया ऋकारस्य अरि-रादेशः स्यात्। वरिसइ वर्षति। हृष-हरिसइ हृष्यति। मृष-मरिसइ

मृष्यते। कृष—करिसइ कर्षति। एवं लक्ष्यवशादुत्प्रेक्ष्यम्। अथ कथं कर्षतीत्यस्य कड्ढ इति? बहुलग्रहणात् पक्षे ढादेश इति प्रवृत्तेः। वृषादीनामिति किं? णच्चइ नृत्यति ॥ ८ ॥

## अन्ते अरः ॥ ९ ॥

सञ्जीवनी ।

ऋत इत्यनुवर्त्तते। धातोरन्ते वर्तमानस्य ऋकारस्य अर इत्यादेशो भवति। अम्हे हरिमो अम्हे हरामो। वयं हरामः हरामहे वा। हृञ् हरणे इति धातोः न्तिहेत्थेत्यादिना मसूमहिङोरन्यतरस्य मोमुमानामन्यतम आदेशः। इच्च बहुषु इति इत्वमात्वं वा। वरामो वृणुमः वृणमहे वा। वृञ् वरणे इत्यस्य। धरइ धरए ध्रियते। धृङ् अवस्थाने। ततिपोरिदेताविति इदेतावादेशौ ॥ ९ ॥

सुबोधिनी ।

धातोरन्ते वर्तमानस्य ऋतः अर इति स्यात्। हरइ हरति ॥ ९ ॥

## कृञः कुण च ॥ १० ॥

सञ्जीवनी।

डुकृञ् करणे इत्यस्य कुण आदेशः स्यात्। चकारात् ऋकारस्यारादेशः। कुणइ कुणए करोति कुरुते वा। तातिपोरिदेताविति तिप्तयोरन्यतरस्य इदेतौ। पक्षे करेइ॥ १०॥

सुबोधिनी।

कृञ इति धातोः कुण इत्यादिश्यते। चकारादर इत्यपि। कुणइ कुणए करोति कुरुते वा। पक्षे करइ करए॥ १०॥

# जृम्भेर्जम्भा॥ ११॥

सञ्जीवनी।

जभि जृभी गात्रविनामे इत्यस्य जंभा स्यात्। जंभाइ जंभाअइ जृम्भते। तप्रत्ययस्य तातिपोरिदेताविति इत्वम्। अनदन्तानामद् वा इति वा अकारागमः। 'जृम्भेर्जम्भेति नादेशः सोपसर्गस्य दृश्यते'। आअंभइ आजृम्भते विअंभइ विजृम्भते। ऋतोऽत् इत्यत्वम्। कगचादिना जलोपः॥ ११॥

सुबोधिनी।

जृभी गात्रविनामे इत्यस्य धातोर्जंभा इति स्यात्। जंभाइ

जृम्भते। 'जृभेर्जंभेति नादेशः सोपसर्गस्य दृश्यते'। विअंभइ विजृम्भते इति ॥ ११ ॥

## ग्रहेर्गेण्हः ॥ १२ ॥

सञ्जीवनी ।

ग्रह उपादाने इत्यस्य गेण्ह आदेशः स्यात् । गेण्हइ गृह्णाति गृह्णीते वा । गेण्हिअइ गेण्हिज्जइ गृह्यते । यक इअइज्जाविति इअइज्जौ । क्वचिदपि लोप इत्यलोपः ॥ १२ ॥

सुबोधिनी ।

ग्रह उपादान इत्यस्य गेण्ह इति स्यात् । गेण्हइ गृह्णाति ॥ १२ ॥

## घेत्त क्त्वातुमुन्तव्येषु ॥ १३ ॥

सञ्जीवनी ।

ग्रहेरित्यनुवर्तते। घेत्त इति लुप्तप्रथमान्तम् । क्त्वातुमुन्तव्येषु परेषु ग्रहेर्घेत्त आदेशः स्यात्। पूर्वेण गेण्ह आदेशः प्राप्तः। घेत्तूण गृहीत्वा। क्त्व तूण इति तृणादेशः। तस्य कगचादिना तलोपः। क्वचिदपि

लोप इत्यलोपः । घेत्तुं गृहीतुम् । पूर्ववत् लोपद्वयम् । घेत्तव्वं गृहीतव्यम् । अधो मनयामिति यलोपः । शेषादेशादिना वस्य द्वित्वम् ॥ १३ ॥

सुबोधिनी ।

क्त्वादिपरे ग्रहेर्घेत्त इति स्यात् । घेत्तूण गृहीत्वा । घेत्तुं गृहीतुं । घेत्तव्वं गृहीतव्यम् ॥ १३ ॥

# कृञः का भूतभविष्यतोश्च ॥ १४ ॥

सञ्जीवनी ।

का इति लुप्तप्रथमान्तम् । क्त्वातुमुन्तव्येष्वित्यनुवर्तते । भूते भविष्यति च यः प्रत्ययः तस्मिन् परे क्त्वा तुमुन् तव्य इत्येतेषु प्रत्ययेषु च डुकृञ् करणे इत्यस्य कादेशो भवति । कृञः कुण च इत्यस्य बाधकः । काहीअ अकार्षीत् अकरोत् चकार वा । भूते लुङ् अद्यतनी, अनद्यतने लङ् ह्यस्तनी, परोक्षे लिट् परोक्षा, एषामन्यतमो यो लकारः तस्य एकाचो हीअ इति हीअ आदेशः । काहिइ करिष्यति क्रियात् कर्ता वा । भविष्यति लृट् भविष्यन्ती, आशिषि लिङ् आशीः, अनद्यतने लुट् श्वस्तनी, एषामन्यतमो

यो लकारस्तस्य मो बिन्दुरित्यादिना बिन्दुः । पूर्ववत् नलोपः । काअव्वं कर्त्तव्यम् । अधो मनयामित्यादिना यलोपः । शेषादेशादिना वस्य द्वित्वम् । पूर्ववत् तलोपः ॥ १४ ॥

सुबोधिनी ।

भूते भविष्यति च यः प्रत्ययस्तस्मिन् परे क्त्वादिषु परेषु च कृञ् इत्यस्य का इति स्यात् । काहीअ अकरोत् अकार्षीत् चकार वा । काहिइ करिष्यति क्रियात् कर्त्ता वा । काऊण कृत्वा । काउं कर्त्तुम् । काअव्वं कर्तव्यम् ॥ १४ ॥

# स्मरतेर्भरसुमरौ ॥ १५ ॥

सञ्जीवनी ।

स्मृ चिन्तायामित्यस्य भरसुमरावित्यादेशौ भवतः । अधो मनयामिति अन्ते अर इत्येते बाध्येते । भरिस्सं भरिहिमि सुमरिस्सं सुमरिहिमि स्मरिष्यामि । भविष्यति लृट् भविष्यन्ती । अन्ते इणिमपोर्मिरिति मिरादेशः । तेन सह मिना स्सं वेति स्सं इति द्विसकारको विकरणः । पक्षे तेनैव मध्ये हिः । ए च क्त्वेत्यादिना प्रकृतेरेत्वमित्वं वा ॥ १५ ॥

सुबोधिनी।

स्मृ चिन्तायां इत्यस्य धातोर्भर सुमर इत्यादेशौ स्तः। भरइ सुमरइ स्मरति॥ १५॥

# भियो भावीहौ॥ १६॥

सञ्जीवनी।

ञिभी भय इत्यस्य भावीहौ इत्यादेशौ भवतः। भाइ वीहइ। भियो वीह इत्येष चादेशः क्तेऽपि। भीओ। वीहिओ भीतः। वीहादेशस्य क्ते इतीत्वम्॥१६॥

सुबोधिनी।

ञिभी भये इत्यस्य भा वीह इत्यादेशौ स्तः। भाइ वीहइ विभेति॥ १६॥

# म्लो वा वाअ॥ १७॥

सञ्जीवनी।

वा वाअ इति लुप्तप्रथमान्तम्। म्लै गात्रविनामे इत्यस्य वा वाअ इत्येतौ आदेशौ भवतः। वाइ वाअइ म्लायति। ततिपोरिदेतौ इति तिपः इत्वम्। ननु अनदन्तानामद् वा इत्यनेन अकाराग-

ग्लैव चाऽसइ इत्यस्य सिद्धत्वात् किं चाम इत्या-देशान्तरविधानेन ? सत्यं तस्यैव प्रपञ्चार्थम् ॥ १७ ॥

सुबोधिनी ।

ग्लै गात्रविनामे इत्यस्य वा चाम इत्यादेशौ स्तः । चाअइ ग्लायति । वाशब्दान्तरविधानेनान्यिह ॥ १७ ॥

## तृपस्थिप्पः ॥ १८ ॥

सञ्जीवनी ।

तृप् प्रीणने इत्यस्य थिप्प इत्यादेशः स्यात् । थिप्पन्तो थिप्पमाणो तृप्यन् तृप्यमाणः । न्तमाणौ शानृशानचोरिति न्त माण आदेशौ भवतः । थिप्पई तृप्यन्ती । ई च स्त्रियामिति शानृशानचो-रीकारादेशः ॥ १८ ॥

सुबोधिनी ।

तृप प्रीणने इत्यस्य थिप्प इत्यादेशः । थिप्पइ तृप्यति ॥ १८ ॥

## ज्ञो जाणमुणौ ॥ १९ ॥

सञ्जीवनी ।

ज्ञा अवबोधने इत्यस्य जाण मुण इत्यादेशौ भवतः । तुम्हे जाणह तुम्हे जाणित्था । तुम्हे मुणह तुम्हे मुणित्था यूयं जानीथा जानीध्वे वा । न्तिहेत्थे- त्यादिना थध्वयोः प्रत्येकं ह इत्था इत्यादेशौ भवतः । यत्र इत्था तत्र सन्धावकारलोपः । 'म्नज्ञादिनेह सूत्रेण ज्ञो णा इत्यपि दृश्यते' । णाइ जानाति । णाअं ज्ञातम् । णाऊण ज्ञात्वा । अडादेशा बहुलमिति आत्वम् । इत्यादयः ॥ १९ ॥

सुबोधिनी ।

ज्ञा अवबोधन इत्यस्य जाण मुण इत्यादिश्येते । जाणइ मुणइ जानाति जानीते वा । 'म्नज्ञादिनेह सूत्रेण ज्ञो ण इत्यपि दृश्यते' । णाइ जानाति ॥ १९ ॥

# घटेर्गढः ॥ २० ॥

सञ्जीवनी ।

घट चेष्टायामित्यस्य गढादेशः स्यात् । गढइ घटते । तस्य तातिपोरिदेतौ इति इ ए आदेशौ ॥२०॥

सुबोधिनी ।

घट चेष्टायामित्यस्य गढ इति स्यात् । गढइ घटते ॥ २० ॥

## समो गलः ॥ २१ ॥

सञ्जीवनी ।

घट इत्यनुवर्तते । सम् उपसर्गात् परस्य घटतेर्गल आदेशः स्यात् । संगलइ संघटते ॥ २१ ॥

सुबोधिनी ।

समुपसर्गादुत्तरस्य घटः गल इत्यादिश्यते । संगलइ संघटते ॥ २१ ॥

## स्रंसो ल्हसः ॥ २२ ॥

सञ्जीवनी ।

स्रंसु ध्वंसु अधःपतने इत्यस्य स्रंसः ल्हस इत्यादेशः स्यात् । ल्हसइ ल्हसए स्रंसते ॥ २२ ॥

सुबोधिनी ।

स्रंसु अधःपतने इत्यस्य ल्हस इत्यादिश्यते । ल्हसइ स्रंसते ॥ २२ ॥

## नेः सदः सज्जः ॥ २३ ॥

सञ्जीवनी।

नेरुपसर्गात् परस्य षद्लृ विशरणगत्यवसादनेषु इत्यस्य सज्ज आदेशः स्यात्। निसज्जइ निषीदति ॥२३॥

सुबोधिनी।

निउपसर्गादुत्तरस्य षद्लृ विशरण इत्यस्य मज्ज इति स्यात्। णिमज्जइ निषीदति ॥ २३ ॥

# आङो रभेर्ढवः ॥ २४ ॥

सञ्जीवनी।

आङ उपसर्गात् परस्य रभ राभ इत्यस्य ढव आदेशः स्यात्। आढवइ आढवेइ आरभते। लादेशे वा इति एत्वम्। आढविअं आरब्धम्। क्ते इति इत्वम्। कथं तर्हि आढत्तं आरब्धमिति? उच्यते- क्तेन दिण्णादयः इति आढत्तादेशस्य निपातनात्॥ २४ ॥

सुबोधिनी।

आङ उपसर्गात् रभ राभ इत्यस्य ढव इति स्यात्। आढवइ आढवेइ आरभते। कथं तर्हि आढत्तं अरब्धमिति? क्तेन दिण्णादय इत्याढत्तं इत्यादेशस्य निपातनात् ॥ २४ ॥

# उदि शलेः थल्लो वा ॥ २५ ॥

सञ्जीवनी ।

उदि उपसर्गे सति शल चल आशुगतौ इत्यस्य शलः थल्ल आदेशः स्यात् । उत्थल्लइ उच्छलति । उपरि लोप इत्यादिना तलोपः । शेषस्य थस्य द्वित्वे वर्गे युजः पूर्व इति तः । पक्षे उच्छलइ । ततिपोरिदेताविति तिपः इत्वम् । शेषं संस्कृत-वत् ॥ २५ ॥

सुबोधिनी ।

उदुपसर्गे सति शल चल गताविस्यस्य थल्ल इत्यादेशो वा स्यात् । उत्थल्लइ उच्छलति पक्षे उच्छलइ ॥ २५ ॥

# पिबतेर्घोटः ॥ २६ ॥

सञ्जीवनी ।

वा इत्यनुवर्त्तते । पा पाने इत्यस्य घोट आदेशः स्यात् वा । घोटइ पिबति । पक्षे पिबइ पिअइ । एवमन्येऽपीति पिब पिअ आदेशौ ॥ २६ ॥

सुबोधिनी ।

पा पान इत्यस्य घोट इति स्यात् । घोटइ पिबति

पक्षे पिवइ ॥ २६ ॥

## जल्पेर्लो मः ॥ २७ ॥

सञ्जीवनी ।

ल इति षष्ठ्यन्तम् । मकारे अकार उच्चारणार्थः । जल्प व्यक्तायां वाचीत्यस्य जल्पेः सम्बन्धी यो लकारः तस्य मकारादेशः स्यात् । सर्वत्र लवरामिति ललोपः प्राप्तः । जंपिरो जल्पनशीलः । तृण इर शील इति तृण्प्रत्ययस्य इरादेशः । जंपिअं जल्पितम् । शेषाणामदन्ततेति अदन्तत्वात् क्ते इति इत्वम् ॥२७॥

सुबोधिनी ।

जल्प व्यक्तायां वाचीत्यस्य यो लकारस्तस्य म इति स्यात् । जंपइ जल्पति ॥ २७ ॥

## स्थाध्यागानां ठाअ झाअ गाअ ॥ २८ ॥

सञ्जीवनी ।

ष्ठा गतिनिवृत्तौ, ध्यै चिन्तायाम, कै गै शब्दे, इत्येतेषां धातूनां यथासंख्यं ठाअ झाअ गाअ इति

अथ आदेशा भवन्ति । ठाअइ तिष्ठति । झाअइ ध्यायति । गाअइ गायति । ठाइअ स्थित्वा । झाइअ ध्यात्वा । गाइअ गात्वा । 'असमासे अ आदेशः क्त्वेत्यस्य प्रवर्तते' । इति अ आदेशः । ए च क्त्वेत्यादिना इत्वमेत्वं वा ॥ २८ ॥

सुबोधिनी ।

ष्ठा गतिनिवृत्तौ, ध्यै चिन्तायां, गै शब्दे, इत्येतेषां धातूनां यथासंख्यं ठाअ झाअ गाअ इत्यादेशाः स्युः । ठाअइ झाअइ गाअइ तिष्ठति ध्यायति गायति ॥ २८ ॥

# ठाझागाश्च भविष्यद्-वर्तमानविध्याद्येक-वचने ॥ २९ ॥

सञ्जीविनी ।

ष्ठाध्यागा इत्यनुवर्तन्ते । विधिरादिर्येषां निमन्त्रणादीनां ते विध्यादयः । भविष्यति लृट् भविष्यन्ती, आशिषि लिङ् आशीः, लुट् श्वस्तनीति त्रीणि, वर्तमाने लट् वर्तमाना, विधिलोट् पञ्चमी, लिङ् सप्तमी, एषां सम्बन्धिनि एकवचने परे ष्ठा ध्या गा इत्येतेषां

त्रयाणां यथासंख्यं ठा झा गा इति त्रय आदेशाः स्युः । चकारात् पूर्वसूत्रोक्ताः ठाअ झाअ गाअ इत्यन्येऽपि त्रयो भविष्यन्ति । ठाहिइ ठाअहिइ स्थास्यति स्थेयात् स्थाता वा । एवं झाहिइ झाअहिइ ध्यास्यति ध्येयात् ध्याता वा । गाहिइ गाअहिइ गास्यति गेयात् गाता वा । वर्तमाने–ठाइ तिष्ठति । तिपः ततिपोरिदेतौ इति इत्वम् । पक्षे ठाअइ तिष्ठति । एवं झाइ झाअइ ध्यायति । गाइ गाअइ गायति । विध्यादौ–ठाउ ठाअउ तिष्ठतु तिष्ठेत् वा । लोटि लिङि च तिपः उ सु मु विध्यादिष्वेकस्मिन् इति उकारादेशः । एवं झाउ झाअउ ध्यायतु ध्यायेद्वा । गाउ गाअउ गायतु गायेद्वा । एकवचन इति किम् ? ठाअन्ति तिष्ठन्ति । झाअन्ति ध्यायन्ति । गाअन्ति गायन्ति । एषु पूर्वेण ठाअ झाअ गाअ आदेशाः । न्तिहेत्थेत्यादिना लटि झेः न्तिरादेशः ॥२९॥

## सुबोधिनी ।

भविष्यदाद्यर्थे उत्पन्ने एकवचने परे स्थादीनां क्रमेण ठा झा गा इत्यादिश्यते । चकारात् ठाअ आदयः । ठाहिइ स्थास्यति स्थेयात् स्थाता वा । पक्षे ठाअहिइ । झाहिइ ध्यास्यति ध्यायात् ध्याता वा । पक्षे झाअहिइ । गाहिइ गास्यति गायात् गाता वा पक्षे गाअहिइ । ठाइ ठाअइ झाइ झाअइ गाइ गाअइ तिष्ठति

ध्यायति गायति । ठाउ ठाअउ तिष्ठतु । झाउ झाअउ ध्यायतु । गाउ गाअउ गायतु तिष्ठेद्वा ध्यायेद्वा गायेद्वा ॥ २९ ॥

# खादिधाव्योः खा धा ॥ ३० ॥

सञ्जीवनी ।

खा धा लुप्तप्रथमाद्विवचनान्तम् । भविष्यत्वर्तमानविध्याद्येकवचनमित्यनुवर्तते । खाद भक्षणे धावु गतिशुध्योरित्यनयोर्यथासंख्यं खा धा इत्येतावादेशौ भवतः भविष्यति वर्तमाने विध्यादौ च एकवचने परे । भविष्यति तावत्–खाहिइ खादिष्यति । धाहिइ धाविष्यति । लटि तिपः ततिपोरिदेताविति इत्वम् । धातोर्भविष्यति हिः इति हिर्विकरणः । वर्तमाने तु–तुमं खासि त्वं खादसि । तुमं धासि त्वं धावसि । लटि सिप्थासोः सि से इति सिरादेशः । विध्यादौ–अहं खामु अहं खादानि । अहं धामु अहं धावानि । लोटि मिपः उ सु मु विध्यादिष्वेकस्मिन् इति मुरादेशः । एकवचन इति किम्? खाअन्तु खादन्तु । धाअन्तु धावन्तु । न्तुहमो बहुषु इति लोटि झेः न्तुरादेशः । शेषाणामदन्ततेति धातोरदन्तत्वम् । कगचादिना तलोपः । 'एकत्वेऽपि भवेत् क्वापि धावतेर्धा विभाषया' । धाहिइ धाविहिइ

धाविष्यति । धाइ धावइ धावति । धाउ धावउ धावतु ॥ ३० ॥

सुबोधिनी ।

खादृ भक्षणे धावु गतिशुद्ध्योरित्यनयोः क्रमेण खा धा इत्यादेशौ स्तः भविष्यद्वर्तमानविध्याद्येकवचने परे । खाहिइ खादिष्यति खाद्यात् खादिता वा । धाहिइ धाविष्यति धाव्यात् धाविता वा । खाइ खादति धाइ धावति खाउ खादतु धाउ धावतु खादेद्वा धावेद्वा । 'एकत्वेऽपि भवेत् क्वापि धावतेर्धा विभाषया' । धावहिइ धावइ धाइ धाउ धावउ ॥ ३० ॥

## ग्रसेर्विसः ॥ ३१ ॥

सञ्जीवनी ।

ग्रसु ग्लसु अदने इत्यस्य ग्रसेर्विस आदेशः स्यात् । अम्हे विसिस्सामो अम्हे विसिहामो वयं ग्रसिष्यामः । वयं ग्रसिष्यामहे । भविष्यति लृटि महिङः न्तिहेत्थेत्यादिना मोमुमानामन्यतम आदेशः स्यात् । उत्तमे स्सा हा इति स्सा हा विकरणौ । ए च क्त्वेत्यादिना प्रकृतेरेत्वमित्वं वा ॥ ३१ ॥

सुबोधिनी ।

ग्रसु अदने इत्यस्य विस इत्यादेशः स्यात् । विसः ग्रसते ॥ ३१ ॥

# चिञश्चिणः ॥ ३२ ॥

सञ्जीवनी ।

चिञ् चयने इत्यस्य चिण आदेशो भवति । चिणेइ चिणइ चिनोति चिनुते वा । लादेशे वा इत्येत्वम् । 'आदिश्यते चिञो धातोश्चेअ इत्येष वा क्वचित्' । उच्चेअइ उच्चिनोति । अडादेशा बहुलमिति इकारस्य एत्वम् । पक्षे उच्चिणइ । उच्चेअउं उच्चिणिउं उच्चेतुम् । उभयत्र ए च क्त्वेत्यादिना इत्वमेत्वं वा ॥ ३२ ॥

सुबोधिनी ।

चिञ् चयन इत्यस्य चिण आदेशः स्यात् । चिणइ चिणेइ चिणए चिनोति चिनुते वा । 'आदिश्यते चिञो धातोश्चेअ इत्येष वा क्वचित्' । उच्चेअइ उच्चिणइ उच्चिनोति । उच्चेअउं उच्चिणेउं उच्चिणिउं उच्चेतुम् ॥ ३२ ॥

# क्रीञः किणः ॥ ३३ ॥

सञ्जीवनी ।

डुक्रीञ् द्रव्यविनिमये इत्यस्य किण इत्यादेशः स्यात् । किणइ किणए क्रीणाति क्रीणीते वा ।

तातिपोरिदेतौ इति तिपतयोरन्यतरस्य इदेतौ । किणिअं क्रीतम् । क्त इति किणादेशस्य इत्वम् ॥ ३३ ॥

सुबोधिनी ।

क्रीञ इत्यस्य किण इत्यादिश्यते । किणइ किणए क्रीणाति क्रीणीते वा ॥ ३३ ॥

## वेः के च ॥ ३४ ॥

सञ्जीवनी ।

क्रीञ इत्यनुवर्तते । विरित्युपसर्गात् परस्य क्रीञः के इत्यादेशः स्यात् । चकारात् पूर्वसूत्रोक्तः किणादेशः । विक्केइ विक्किणइ विक्रीणीते । सेवादिषु वा इति क इत्यादेर्द्वित्वम् । किणादेशेऽपि । विक्केन्तो विक्किणन्तो विक्रीणानः । न्तमाणौ शतृशानचोरिति न्तआदेशः ॥ ३४ ॥

सुबोधिनी ।

विउपसर्गादुत्तरस्य क्रीञः के इत्यादिश्यते । चकारात् किणादेशोपि । विक्केइ विक्किणइ विक्रीणीते ॥ ३४ ॥

## उध्मो धुमा ॥ ३५ ॥

सञ्जीवनी ।

उद्ध्म इति षष्ठ्यन्तम् । ध्मा शब्दाग्निसंयोगयो-रित्यस्य उदुपसर्गात् परस्य धुमा इत्यादेशः स्यात् । उद्धुमाइ उद्धमति ॥ ३५ ॥

सुबोधिनी ।

उदुपसर्गादुत्तरस्य ध्मा शब्दाग्निसंयोगयोरित्यस्य धूमा इत्यादिश्यते । उद्धूमाइ उद्धमति ॥ ३५ ॥

# श्रदो धो दहः ॥ ३६ ॥

सञ्जीवनी ।

ध इति षष्ठ्येकवचनान्तम् । श्रद इत्युपसर्गात् परस्य डुधाञ् धारणपोषणयोरित्यस्य दह इत्यादेशो भवति । सद्दहइ श्रद्धधाति । सर्वत्र लवरामिति रलोपः । शषोः स इति शस्य सः । सद्दहियं श्रद्धितम् । क्ते इति इत्वम् । कगचादिना तलोपः । अन्त्यस्य हल इति श्रदो दलोपः । धातोर्वा अकृतद्वित्वो दहादेशः ॥ ३६ ॥

सुबोधिनी ।

श्रदित्यतः डुधाञ् इत्यस्य दह इति स्यात् । सद्दहइ श्रद्धधाति ॥ ३६ ॥

# अवाद् गाहेर्वाहः ॥ ३७ ॥

सञ्जीवनी ।

अव इत्यस्मादुपसर्गात् परस्य गाहू विलोडने इत्यस्य वाह आदेशो भवति । ओवाहइ अवगाहते । ओदवापयोरिति वा ओत्वम् । ओत्वाभावपक्षे अवआहइ । कगचादिना आदेशस्य वलोपः । अवादिति किम् ? गहइ । शेषाणामदन्ततेत्यदन्तत्वम् ॥ ३७ ॥

सुबोधिनी ।

अवोपसर्गादुत्तरस्य गाहू विलोडने इत्यस्य वाह इति स्यात् । ओवाहइ ओवाहए अवगाहते । अवादिति किम् ? गहइ ॥ ३७ ॥

# काशेर्वासः ॥ ३८ ॥

सञ्जीवनी ।

अवादित्यनुवर्तते । काशृ दीप्तावित्यस्यावोपसर्गात् परस्य वास आदेशो भवति । ओवासइ अवआसइ ओवासए अवआसए अवकाशते । अवादिति किम् ? कासइ । सर्वत्र पूर्वसूत्रवत् रूपसिद्धिः । ओवासिउं अवआसिउं अवकाश्य ।

'वाशब्दस्य उं आदेशः कृत्वास्थितस्य क्वचिद्भवेत्' । इति उं आदेशः । ए च क्त्वतुयादिना एत्वमित्वं वा । कगचजादिना तलोपः । णमुलि वा प्रतिप्रयोगौ ॥ ३८ ॥

सुबोधिनी ।

अवात् परस्य काशृ दीप्तावित्यस्य वास इति स्यात् । ओवासइ अवआसइ ओवासए अवआसए अवकाशते । अवादिति किम्? कासइ काशते ॥ ३८ ॥

# निरो माङो माणमवौ ॥ ३९ ॥

सञ्जीवनी ।

निरुपसर्गात् परस्य माङ् माने इत्यस्य माण मव आदेशौ भवतः । णिम्माणेइ णिम्माणइ णिम्मवए णिम्मवइ निर्मिमीते । ततिपोरिदेतौ इति इदेतौ । माणमवादेशयोर्लादेशे वा इति पक्षे एत्वम् । सर्वत्र लवरामिति निरो रलोपः । शेषादेशादिना मस्य द्वित्वम् । नो णः इति णः । ननु कथं सम्माणेइ सम्मानयति ? मान पूजायामिति धात्वन्तरस्य । 'निरः परस्य माङो वा स्यातां मणमरौ क्वचित्' । णिम्माणिऊण णिम्मारिऊण । क्त्व तूणः

इति तूण आदेशः। माण मव आदेशाभ्यामन्यत्र अडादेशा बहुलमिति अकारस्य आत्वम्। त्रिष्वपि ए च क्त्वेत्यादिना एत्वमित्वं वा ॥ ३९ ॥

सुबोधिनी।

निरुपसर्गादुत्तरस्य माङ् माने इत्यस्य माण मव इत्यादिश्येते। णिम्माणेइ णिम्माणइ णिम्माणए णिम्मवेइ णिम्मवए निर्मिमीते। ननु कथं सम्माणेइ सम्मानयति? मान पूजायामित्यस्य स्यात्। 'निरः परस्य माङो वा स्यातां मणमरौ क्वचित्'। णिम्मणिऊण णिम्मारिऊण निर्माय ॥ ३९ ॥

# पदेर्व्वलः ॥ ४० ॥

सञ्जीवनी।

निर इत्यनुवर्तते। निरुपसर्गात् परस्य पद गतौ इत्यस्य व्वल इत्यादेशो भवति। णिव्वलइ निष्पद्यते वस्तु ॥ ४० ॥

सुबोधिनी।

निरुपसर्गात्परस्य पदगतौ इत्यस्य व्वल इति स्यात्। णिव्वलइ निष्पद्यते ॥ ४० ॥

# क्षियो झिज्जः ॥ ४१ ॥

सञ्जीवनी ।

क्षि क्षये इत्यस्य झिज्ज इत्यादेशः । झिज्जइ क्षीयते ॥ ४१ ॥

सुबोधिनी ।

क्षि क्षये इत्यस्य झिज्ज इत्यादेशो भवति । झिज्जइ क्षीयते ॥ ४१ ॥

# भिदिछिदोरन्त्यस्य न्दः ॥४२॥

सञ्जीवनिः ।

भिदिर् विदारणे छिदिर् द्वैधीकरणे इत्यनयोर्धात्वोः योऽन्त्यो वर्णः तस्य न्द इत्यादेशः स्यात् । तुमं भिन्दसु तुमं छिन्दसु । त्वं भिन्धि त्वं छिन्धि । अत्र मध्यमपुरुषैकवचने लोटि सिपः उ सु मु विध्यादिष्वेकस्मिन् इति सुरादेशः । 'त्त इति क्वचिदादेशो विकल्पेन भिदिच्छिदोः' । भेत्तूण छेत्तूण । भित्त्वा छित्वा । क्त्व तूण इति तूणः । अडादेशा बहुलमिति इकारस्य एत्वम् । पक्षे भिन्दिऊण छिन्दिऊण । न्द इत्यादेशस्य ए च क्त्वेत्या-

दिना एत्वमित्वं वा ॥ ४२ ॥

सुबोधिनी ।

भिदिर् छिदिर् इत्यनयोरन्त्यवर्णस्य न्द इति स्यात् । भिन्दइ भिनत्ति छिन्दइ छिनत्ति 'त्त इति क्वाचिदादेशो विकल्पेन भिदिच्छिदो'ः । भिन्दिऊण भेत्तूण भित्वा । छिन्दिऊण छेत्तूण छित्वा ॥ ४२ ॥

# क्वथेर्ढः ॥ ४३ ॥

सञ्जीवनी ।

अन्त्यस्य इत्यनुवर्तते श्रुहुजिलूधूनां णोऽन्ते ह्रस्वश्च इत्यतः प्राक् । क्वथ निष्पाके इत्यस्य योऽन्त्यो वर्णस्तस्य ढकारादेशः स्यात् । खघथादिना हत्वं प्राप्तम् । कढइ कढए क्वथयति । कढुआण क्वथित्वा । 'क्वचित् क्त्वाप्रत्ययस्येह उआण इत्यपीष्यते' । इति उआण आदेशः । सन्धावकारलोपः ॥ ४३ ॥

सुबोधिनी ।

क्वथ निष्पाके इत्यस्य योऽन्त्यो वर्णस्तस्य ढ इति स्यात् । कढए क्वथयति ॥ ४३ ॥

# वेष्टेश्च ॥ ४४ ॥

सञ्जीवनी ।

ढ इत्यनुवर्तते । वेष्ट वेष्टने इत्यस्य योऽन्त्यो वर्णः ष्टः, तस्य ढकारादेशः स्यात् । ष्टस्य ठः इत्यस्य बाधः । वेढइ वेष्टते । योगविभाग उत्तरार्थः ॥ ४४ ॥

सुबोधिनी ।

वेष्ट वेष्टन इत्यस्य योन्त्यो वर्णस्तस्य ढ इति स्यात् । वेढइ वेढए वेष्टते ॥ ४४ ॥

# उत्समोर्ल्लः ॥ ४५ ॥

सञ्जीवनी ।

वेष्टेरित्यनुवर्तते । उत्समोरिति पञ्चम्याः स्थाने षष्ठीयमित्याहुः । तेन उत्सामित्येताभ्यां वेष्ट वेष्टने इत्यस्य योऽन्त्यो वर्णस्तस्य द्वित्वापन्नो ल्ल आदेशः स्यात् । उव्वेल्लइ उद्वेष्टते । उपरि लोपः इत्यादिना उदो दलोपः । शेषादेशादिना द्वित्वम् । संवेल्लइ संवेष्टते । शेषादेशादिना द्वित्वस्य सिद्धत्वात् किमर्थं द्विलकारको निर्देशः ? ल्ल आदेशसामर्थ्य-विधानादेव द्वित्वस्याप्राप्तिः । अन्यथा वेष्टेश्चेत्यनेन

ढकारादेशस्यापि द्वित्वं स्यात् ॥ ४५ ॥

सुबोधिनी ।

उत्पूर्वस्य संपूर्वस्य च वेष्टेरन्त्यवर्णस्य ल्ल इति स्यात् । उव्वेल्लइ उद्वेष्टते संवेल्लइ संवेष्टते ॥ ४५ ॥

## रुदो वः ॥ ४६ ॥

सञ्जीवनी ।

रुदिर् अश्रुविमोचने इत्यस्य योऽन्त्यो वर्णस्तस्य वकारादेशः स्यात् । रुवइ । ये तु रोवइ इत्युदाहरन्ति तन्मते अडादेशा बहुलमिति उकारस्य ओत्वम् । रुइरा रोदनशीला । तृण इर शील इति इरादेशः । कगचादिना वकारादेशस्य लोपः । तस्यैव क्वचिदपि लोप इत्यकार लोपः । आदीतौ बहुलमिति आप्रत्ययः । क्वचिदपि लोप इति पुनरकारलोपः ॥ ४६ ॥

सुबोधिनी ।

रुदिर इत्यस्यांत्यवर्णस्य व इति स्यात् । रुवइ रोदिति रोवइ इति केचित् ॥ ४६ ॥

## उदो विजेः ॥ ४७ ॥

सञ्जीवनी ।

व इत्यनुवर्तते । उदुपसर्गात् परस्य ओविजी भयचलनयोरित्यस्य योऽन्त्यो वर्णस्तस्य वकारादेशः स्यात् । उव्वेवइ उव्वेवए । अडादेशा बहुलमिति इकारस्य एत्वम् । उपरि लोप इत्यादिना उदो दलोपः । शेषादेशादिना वस्य द्वित्वम् ॥ ४७ ॥

सुबोधनी ।

उदः परस्य ओविजी इत्यस्यान्त्यवर्णस्य वकारादेशः स्यात् । उव्ववइ उव्वेवए उद्विजते ॥ ४७ ॥

# वृधेर्ड्ढः ॥ ४८ ॥

सञ्जीवनी ।

वृधु वृद्धौ इत्यस्य योऽन्त्यो वर्ण स्तस्य द्वित्वापन्नो ड्ढ आदेशः। वड्ढइ वड्ढए वर्धते । ऋतोऽदिति अत्वम् ॥ ४८ ॥

सुबोधिनी ।

वृधु वृद्धावित्यस्यान्त्यस्य ड्ढः स्यात् । वेड्ढइ वेड्ढए वर्द्धते ॥ ४८ ॥

# हन्तेर्म्मः ॥ ४९ ॥

सञ्जीवनी ।

हन हिंसागत्योरित्यस्य योऽन्त्यो वर्णस्तस्य द्वित्वापन्नो म्म इत्येतदादेशः स्यात् । हम्मए हन्यते । तप्रत्ययस्य इदेतौ । कर्त्रर्थस्य प्रयोगस्याभावात् भावकर्मणोरेव हन्तेज्जइ इत्ययं द्रष्टव्यः । 'क्वापि हन्तेर्म्म इत्येष आदेशो नेष्यते बुधैः' । हणइ हन्ति । शेषाणामदन्ततेति अदन्तत्वम् । हन्तव्वं हन्तव्यम् । तव्यप्रत्ययस्य अधो मनयामिति यलोपः । शेषादेशादिना वस्य द्वित्वम् । हन्तूण हत्वा क्त्व तूणः इति तूणादेशः । हओ हतः । क्तेन दिण्णादयः इति क्तप्रत्येयन सह हन्तेर्हादेशः । संस्कृतसिद्धस्यैव अङ्गीकारात् । कगचादिना तलोपः । 'खनेः क्वापि म्म इत्येष स्यादन्त्यस्य हनोरिव' । खम्मइ खायते खन्यते वा । खनु अवदारणे इत्यस्य इह नान्तद्वित्वामिति इअइज्जयोरभावः । क्वापीति वचनात् इह न भवति । खणिअइ खणिज्जइ ॥ ४९ ॥

सुबोधिनी ।

हन हिंसागत्योरिस्यस्यांत्यवर्णस्य म्म इति स्यात् । हम्मइ हम्मए हन्यते । कर्तरि तु न भवति । तच्चोक्तं—'क्वचिच्च हन्तेर्म्म इति

आदेशो नेष्यते बुधैः' । हणइ हन्ति । हंतव्वं हंतव्यम् हत्तूण हत्वा । हओ हतः ।'खने. क्त्वापि म्म इत्येष स्यादन्त्यस्य यथा हनः'। खम्मइ खायते खन्यते वा । खनु क्त्वापीतिवचनादिह न भवति । खाणिअइ खाणिज्जइ हाणिअइ हाणिज्जइ ॥ ४९ ॥

# रुषादीनां दीर्घः ॥ ५० ॥

सञ्जीवनी ।

अन्त्यस्येति नदीस्रोतोन्यायेन वर्तमानमपि अत्र सूत्रे नानुवर्तते । अन्ते ह्रस्वस्यासंम्भवात् । रुष आदिर्येषां ते रुषादयः । रुष रोष इत्येवमादीनां धातूनां सम्बन्धिन्या उपधाया उकारस्य दीर्घता भवति । रूसइ रूसेइ रूसए रुष्यति । ततिपोरिदेतौ इति तिप इदेतौ । शषोः स इति षस्य सः । तस्य लादेशे वा इति वा एत्वम् । सूसइ शुष्यति । शुष् शोषणे । शषोः सः इति शषोः सौ । दूसेइ दूषयति । दुष् वैकृत्ये णिचः एदादेरादिति एत्वम् । इदं च नोदाहार्यम् । संस्कृतशब्दानुशासने एव णिचि ऊत्वविधाने सिद्धत्वात् । रुषादीनामिति किम् ? रुवइ रोदिति । रुदो वः इति दस्य वः ॥ ५० ॥

सुबोधिनी ।

अस्मिन् सूत्रे अन्त्यस्य इति नानुवर्तते । रुष रोष इत्यादीनामुपधायाः उकारस्य दीर्घः स्यात् । रूसइ रूसए रुष्यति । तूसइ तुष्यति । दूसइ दूसेइ दुष्यति । रुषादीनामिति किम् ? रुवइ रोदिति ॥ ५० ॥

# च्चो व्रजिनृत्योः ॥ ५१ ॥

सञ्जीवनी ।

व्रज गतौ इत्यस्य व्रजेः, नृती गात्रविक्षेपे इत्यस्य योऽन्त्यो वर्णस्तस्य च्च आदेशः स्यात् । वच्चइ व्रजति । सर्वत्र लवरामिति रलोपः । णच्चइ नृत्यति । ऋतोऽत् इति अत्वम् । ननु कथं णट्टं ? उच्यते नट् नृत्य इत्यस्य । नटनीयं नाट्यमिति । नाट्यशब्दस्य अधो मनयामिति यलोपः । शेषादेशादिना द्वित्वम् । अदातो यथादिषु वेति अत्वम् ५१

सुबोधिनी ।

व्रज गतौ नृती गात्रविक्षेपे इत्यनयोरन्त्यवर्णस्य च्च इति स्यात् । वच्चइ व्रजति । णच्चइ नृत्यति । ननु कथं णट्टं ? नट नृत्य इत्यस्य नाट्यमिति तस्मादिदं स्यात् ॥ ५१ ॥

## युधिबुधिगृधिसिधिक्रुधां ज्झः ॥ ५२ ॥

सञ्जीवनी ।

युध संप्रहारे, बुध अवगमने, गृधु अभिकांक्षायाम्, सिधु सन्धौ, क्रुध कोपे, इत्येतेषां पञ्चानां धातूनां कृतद्वित्वो ज्झ इत्यादेशो भवति । जुज्झन्ति । न्तिहेत्थेत्यादिना झप्रत्ययस्य न्तिरादेशः । आदेर्यो ज्जः इति जः । एवं बुज्झन्ति बुध्यन्ति । गिज्झन्ति गृध्यन्ति । अडादेशो बहुलम् इति ऋकारस्य इत्वम् । सिज्झन्ति सिध्यन्ति । कुज्झन्ति क्रुध्यन्ति । सर्वत्र लवरामिति रलोपः ॥ ५२ ॥

सुबोधिनी ।

युध्याद्दीनामन्त्यस्य ज्झः स्यात् । युधि संप्रहारे जुज्झइ युध्यति । बुध अवगमने बुज्झइ बुध्यति । गृधु अभिकांक्षायां गिज्झइ गृध्यति । सिधु सन्धौ सिज्झइ सिध्यति । क्रुध कोपे कुज्झइ क्रुध्यति ॥ ५२ ॥

## रुधेन्धम्भौ ॥ ५३ ॥

सञ्जीवनी ।

रुधिर् आवरणे इत्यस्य योऽन्त्यो वर्णस्तस्य न्ध

म्भ इत्येतौ आदेशौ भवतः । रुन्धइ रुम्भइ रुणद्धि । 'रुधो न्धम्भौ क्वाचिन्नैव क्वचिज्झो भावकर्मणोः' । क्तेन दिपणादय इति क्तेन सह रुद्ध इति निपात्यते । रुज्झइ रुध्यते । अत्र भावकर्मणोरर्थयोः झ इत्यप्रवृत्तेः । नान्तर्द्धित्वे इति यकः इअ इज्जोरभावः ॥ ५३ ॥

सुबोधिनी ।

रुधिर् आवरणे इत्यस्यान्त्यस्य वर्णस्य न्ध म्भ इत्यादिश्येते । रुन्धइ रुम्भइ रुणद्धि । 'रुन्धो न्धम्भौ क्वाचिन्नैव क्वचिज्झो भावकर्मणोः' । रुद्धो रुद्धः । रुज्झइ रुध्यते ॥ ५३ ॥

## मृदो लः ॥ ५४ ॥

सञ्जीवनी ।

मृद क्षोदे इत्यस्य योऽन्त्यो वर्णस्तस्य ल इत्यादेशः स्यात् । मलइ मलेइ मृद्नाति । लादेशे वेति लकारादेशस्य वा एत्वम् । ऋतोऽदित्यत्वम् ॥ ५४ ॥

सुबोधिनी ।

मृद क्षोदे इत्यस्यान्त्यवर्णस्य ल इति स्यात् । मलइ मलेइ मृद्नाति ॥ ५४ ॥

# शदिपत्योर्डः ॥ ५५ ॥

सञ्जीवनी ।

शद्लृ शातने पत्लृ गतावित्यनयोरन्त्यवर्णस्य डकारादेशः स्यात् । सडइ शीयते । शषोः स इति शस्य सः । पडइ पतति ॥ ५५ ॥

सुबोधिनी ।

शद्लृ शातने पत्लृ गतौ इत्यनयोरन्त्यस्य ड इति स्यात् । सडइ शीयते । पडइ पतति ॥ ५५ ॥

# शकादीनां द्वित्वम् ॥ ५६ ॥

सञ्जीवनी ।

शक इत्यनेन सदृशाः शकादयः । शक्लृ शक्तौ इत्येवंप्रकाराणां धातूनां सम्बन्धिनोऽन्त्यवर्णस्य द्वित्वं भवति । सक्कइ शक्नोति । शषोः स इति शस्य सः । शेषाणामदन्ततेति अदन्तत्वम् । सक्कइ मए शक्यते मया । भावे लकारः । नान्त्यद्वित्वे इति यक इअइज्जाभावः । लग्गइ लगति । लग सङ्गे । मग्गइ मार्गति । इदं चाऽत्र नोदाहार्यम् । प्रकारान्तरेण सिद्धत्वात् । तथा हि मार्ग अन्वेषणे । अडादेशा बहुलम्

इत्याकारस्य अत्वम् । सर्वत्र लवरामिति रलोपः । शेषादेशादिना गस्य द्वित्वम् ॥ ५६ ॥

सुबोधिनी ।

शक्लृ शक्तौ इत्यादीनां धातूनामन्त्यवर्णस्य द्वित्वं भवति। सक्कइ शक्नोति ॥ ५६ ॥

## स्फुटिचलोर्वा ॥ ५७ ॥

सञ्जीवनी ।

द्वित्वमित्यनुवर्तते । स्फुट विकसने चल कम्पने इत्यनयोरन्त्यवर्णस्य द्वित्वं वा भवति । अप्राप्तौ विकल्पः । फुट्टइ फुडइ स्फुटति । उपरि लोप इत्यादिना सलोपः । द्वित्वाभावपक्षे टस्य टो ड इति डः ! चल्लइ चलइ । फुट्टो फुडिओ स्फुटितः । क्तेन दिण्णादय इत्यनेन फुट्ट इति निपातितत्वात् । फुडिओ इत्यत्र टो डः इति डः । शेषाणामदन्तेति अदन्तत्वे सति क्ते इतीत्वम् । चल्लिओ चलितः । अदन्तत्वमित्वं च पूर्ववत् ॥ ५७ ॥

सुबोधिनी ।

स्फुट विकसने चल कम्पने इत्यनयोरन्त्यस्य वा द्वित्वं स्यात् । फुट्टइ फुडइ स्फुटति । चल्लइ चलइ चलति ॥ ५७ ॥

## प्रादेर्मीलः ॥ ५८ ॥

सञ्जीवनी ।

वेत्यनुवर्तते । मील इति षष्ठ्येकवचनान्तः । प्र आदिर्यस्य स प्रादिः । तस्मात् प्र परा इत्येवमादेरुपसर्गात् परस्य मील निमेषणे इत्यस्य योऽन्त्यो वर्णस्तस्य द्वित्वं स्याद्वा । णिमिल्लइ णिमीलइ निमीलति । पमिल्लइ पमीलइ प्रमीलति । संमिल्लइ संमीलइ संमीलति । वाशब्दस्य व्यवस्थावाचित्वाद् यत्र अडादेशा बहुलमिति ईकारस्य इत्वं तत्रैव लस्य द्वित्वम् । एवं उम्मिल्लइ उम्मीलइ उन्मीलति । म्नो म इति मः । तस्य शेषादेशादिना द्वित्वम् । प्रादेरिति किम् ? मीलइ मीलति ॥ ५८ ॥

सुबोधिनी ।

प्राद्युपसर्गादुत्तरस्य मील इत्यस्यान्त्यस्य द्वित्वं स्यात् । पमिल्लइ पमीलइ प्रमीलति । एवमुपसर्गान्तराद्बुह्यम् । प्रादेरिति किम् ? मीलइ मीलति ॥ ५८ ॥

## भुजादीनां क्त्वा तुमुन् तव्येषु लोपः ॥ ५९ ॥

## सञ्जीवनी ।

भुज इत्यनेन सदृशा भुजादय । भुज पालनाभ्यवहारयोरित्येवंप्रकाराणां धातूनां अन्त्यवर्णस्य लोपः स्यात् क्त्वा तुमुन् तव्य इत्येतेषु प्रत्ययेषु परेषु । शेषाणामदन्ततेत्यदन्तत्वे कृते ए च क्त्वेत्यादिना इत्वमेत्वं च प्राप्तम् । भोत्तूण भुक्त्वा । अडादेशा बहुलमिति उकारस्य ओत्वम् । क्त्व तूण इति तूणः । भोत्तुं भोक्तुम् । सेवादिषु वेति तकारस्य द्वित्वम् । मो बिन्दुरित्यादिना तुमुनो मस्य बिन्दुः । भोत्तव्वं भोक्तव्यम् । तव्यप्रत्ययस्य अधो मनयामिति यलोपः । शेषादेशादिना द्वित्वम् । उभयत्रापि शेषं पूर्ववत् । एवं मोत्तूण मुक्त्वा । मोत्तुं मोक्तुम् । मोत्तव्वं मोक्तव्यम् । रोत्तूण रुदित्वा । रोत्तुं रोदितुम् । रोत्तव्वं रोदितव्यम् । रुदिर् अश्रुविमोचने ॥ ५९ ॥

## सुबोधिनी ।

भुज पालनाभ्यवहारयोरित्यादीनां क्त्वादिषु परेषु अन्त्यस्य लोपः स्यात् । भोऊण भुक्त्वा । भोत्तुं भोक्तुम् । भोतव्वं भोक्तव्यम् । एवं मोऊण मुक्त्वा । रोऊण रुदित्वा इत्यादि लक्ष्यवशादुत्प्रेक्ष्यम् ॥ ५९ ॥

# श्रुहुजिलूधूनां णोऽन्ते ह्रस्वश्च ॥ ६० ॥

सञ्जीवनी ।

अन्त इति पुनरनुवर्तमाने पुनरत्र ग्रहणमग्रादेशाय । सप्तम्यन्तनिर्देशात् । तेन श्रु इत्येवमादीनां पञ्चानां धातूनां अन्ते परे णकारः प्रयोक्तव्यः । ह्रस्वश्चेति विशेषः । चकारोऽत्रान्वाचये । यथा भो वटो भिक्षामट, यदि गच्छसि तांश्चानयेति । तेनान्ते णकारस्यैव इत्वमेत्वं वा । यस्य च धातोर्दीर्घस्तस्य ह्रस्वो भवति । सुणइ शृणोति । श्रु श्रवणे । सर्वत्र लवरामिति रलोपः । शषोः स इति शस्य सः । 'श्रवादीनां यो णकारोऽन्त्यः स क्वचिद्वा विधीयते' । सुणिऊण सोऊण श्रुत्वा । णकारस्य ए च क्त्वेत्यादिना इत्वमेत्वं वा । णकारान्तत्वात् अन्यत्र अडादेशा बहुलमित्युकारस्योत्वम् । हुणइ जुहोति । हु दाने । हुणन्तो जुह्वत् । न्तमाणावित्यादिना शतुः न्तः । जिणइ जअइ जयति । जि जये इत्यस्य । णकारान्तादन्यत्र एवमन्येऽपीति जअ आदेशः । जिणिऊण जेऊण जित्वा । णकारान्तादन्यत्र अडादेशा बहुलमिति इकारस्य एत्वम् । शेषं पूर्ववत् । लुणेइ लुनाति लुनीते

वा । लूञ् छेदने अत्र ह्रस्वत्वम् । लादेशे वेति वा एत्वम् । लुणिअव्वं लवितव्यम् । ए च क्त्वेत्यादिना णस्य इत्वम् । धुणइ धुणेइ धुनाति धुनीते वा । धूञ् कम्पने । अत्रापि ह्रस्वः । पूर्ववद्वा एत्वम् । 'श्र्वादिभ्य इतरस्यापि णोऽन्ते क्वचन दृश्यते' । थुणइ स्तौति । ष्टुञ् स्तुतौ । ष्टस्य थ इति थः । थुणिऊण । ए च क्त्वेत्यादिना इत्वमेत्वं वा ॥ ६० ॥

सुबोधिनी ।

एषामन्ते णकारो योज्यः । यस्य च दीर्घस्तस्य ह्रस्वः स्यात् । श्रु श्रवणे—सुणइ शृणोति । हु दानादनयोः—हुणइ जुहोति । जि जये—जिणइ जअइ जयति । लूञ् छेदने—लुणइ लुणेइ लुनाति लुनीते वा । धूञ् कम्पने—धूणेइ धुणइ धूनाति धूनीते वा । 'श्र्वादीनां यो णकारोऽन्ते स क्वचिद्वा विधीयते' । सुणिऊण सोऊण श्रुत्वा । जिणिऊण जेऊण जित्वा । 'श्र्वादिभ्य इतरस्यापि णोऽन्ते क्वचन दृश्यते' । थुणइ स्तौति ॥ ६० ॥

# भावकर्मणोर्व्वश्च ॥ ६१ ॥

सञ्जीवनी ।

पूर्वसूत्रमनुवर्तते । भावे कर्मणि वाऽर्थे श्र्वादीनां धातूनामन्ते कृतद्वित्वो व्व इति प्रयोक्तव्यः । चकारात् पूर्वसूत्रोक्तो णकारोऽपि । एषाञ्च मध्ये

यत्र दीर्घस्तत्र ह्रस्वो भवति । सुव्वइ श्रूयते । श्रु श्रवणे इत्यस्मात् भावे कर्मणि वा लकारः । नान्त्यद्वित्व इति इअइज्जोरभावः । सुणिअइ सुणिज्जइ । अत्र यक इअइज्जाविति इअइज्जावित्यादेशौ । हुव्वइ हुणिअइ हुणिज्जइ हूयते । जिव्वइ जिणिअइ जिणिज्जइ जीयते । लुव्वइ लुणिअइ लुणिज्जइ लूयते । धुव्वइ धुणिअइ धुणिज्जइ धूयते ॥ ६१ ॥

सुबोधिनी ।

श्र्वादीनां धातूनां भावे कर्मणि चान्ते व्व इति वक्तव्यः । चकाराण्णकारोपि । दीर्घस्य च ह्रस्वः । सुव्वइ श्रूयते । पक्षे सुणिअइ सुणिज्जइ । लुव्वइ लुणिअइ लुणिज्जइ लूयते । धुव्वइ धुणिअइ धुणिज्जइ धूयते ॥ ६१ ॥

# गमादीनां द्वित्वं वा ॥ ६२ ॥

सञ्जीवनी ।

भावकर्मणोरित्यनुवर्तते क्तेन दिण्णादयः इत्यतः प्राक् । गम इत्यनेन सदृशा गमादयः । तेषामन्त्यस्य द्वित्वं वा दृश्यते । तेन गम्लृ गतौ इत्येवंप्रकाराणां धातूनां द्वित्वं वा भवति भावकर्मणोरर्थयोः । मण्डूकप्लुतिन्यायेनान्त्यस्येत्यनुवृत्तेः अन्त्यस्य ।

गम्मइ गम्यते । कर्मणि लकारः । नान्त्यद्वित्वे इति यक इअइज्जाभावः । पक्षे गमिअइ गमिज्जइ । अत्र यकः इअइज्जौ । लब्भइ लभ्यते । डुलभष् प्राप्तौ । अत्र द्वित्वे वर्गे युजः पूर्वः इति भस्योपरि बः । पक्षे लहिअइ लहिज्जइ । रम्मइ रमिअइ रमिज्जइ । यकः इअइज्जौ । रम्यते । भण्णइ भणिअइ भणिज्जइ भण्यते भण शब्दार्थः । आकृतिगणोऽयम् ॥ ६२ ॥

सुबोधिनी ।

गम्लृ गतावित्यादीनां धातूनां भावकर्मणोर्द्वित्वं वा स्यात् । मण्डूकप्लुतिन्यायेनान्त्यस्येत्यनुवृत्तेरन्त्यस्य । गम्मइ गमिअइ गम्मिज्जइ गम्यते । लब्भइ लहिअइ लहिज्जइ लभ्यते । रम्मइ रमिअइ रमिज्जइ रम्यते । भण्णइ भणिअइ भणिज्जइ भण्यते । आकृतिगणोयम् ॥ ६२ ॥

# दुहिलिहिवहां दुज्झ लिज्झ वुज्झाः ॥ ६३ ॥

सञ्जीवनी ।

दुह प्रपूरणे, लिह आस्वादने, वह प्रापणे, इत्येतेषां त्रयाणां धातूनां यथासंख्यं दुज्झ लिज्झ

बुज्झ इत्येते त्रय आदेशाः स्युः भावकर्मणोरर्थयोः । अनेकवर्णः सर्वस्येति वचनात् सर्वस्य । दुज्झइ दुह्यते । लिज्झइ लिह्यते । वुज्झइ उह्यते । नान्त्यद्वित्वे इति यकोऽभावः । एवमुत्तरसूत्रयोरपि ॥ ६३ ॥

सुबोधिनी ।

एषां धातूनां भावकर्मणोर्यथासंख्यं दुज्झ लिज्झ वुज्झ आदेशाः स्युः । अनेकवर्णः सर्वस्यैवेति वचनात् सर्वस्य । दुज्झइ दुह्यते । लिज्झइ लिह्यते । वुज्झइ उह्यते । केचित्तु वेत्यनुवर्तते तेन दुहिअइ दुहिज्जइ इत्याद्यपि भवति वा एवमुत्तरसूत्रयोरपीत्याहुः ॥ ६३ ॥

# हृञ्कृञोर्हीरकीरौ ॥ ६४ ॥

सञ्जीवनी ।

हृञ् हरणे, डुकृञ् करणे, इत्यनयोः हीरकीरौ यथासंख्यं भवतो भावकर्मणोरर्थयोः । हीरइ ह्रियते कीरइ क्रियते । नान्त्यद्वित्वे इति योगविभागात् यकोऽभावः ॥ ६४ ॥

सुबोधिनी ।

अनयोर्भावकर्मणोः यथासंख्यं एतौ स्तः । हीरइ ह्रियते कीरइ क्रियते ॥ ६४ ॥

## ज्ञो जाणमुणौ ॥ ६५ ॥

सञ्जीवनी ।

ज्ञा अवबोधने इत्यस्य भावकर्मणोः जाण मुण इत्यादेशौ भवतः। जाणेइ मुणेइ ज्ञायते । नान्त्यद्वित्व इति योगविभागात् यकोऽभावः । पक्षे जाणिअइ जाणिज्जइ मुणिअइ मुणिज्जइ । यक इअइज्जौ । वा ग्रहणात् म्नज्ञादिना सूत्रं पाक्षिकं भवत्येव । तेन णकारादेशोऽपि भवति । णाइअइ णाइज्जइ ज्ञायते । अडादेशा बहुलं इति आत्वम् । इअइज्जौ पूर्ववत् ॥६५॥

सुबोधिनी ।

ज्ञो णज्जणव्वौ ॥ ६५ ॥

ज्ञा इत्यस्य भावकर्मणोः णज्ज णव्व इत्यादेशौ स्तः । णज्जइ णव्वइ ज्ञायते ॥ ६५ ॥

## ग्रहेर्घेप्पः ॥ ६६ ॥

सञ्जीवनी ।

वेत्यनुवर्तते । ग्रह उपादाने इत्यस्य घेप्प

इत्यादेशः स्यात् भावकर्मणोरर्थयोः । ग्रहेर्गेण्हः इति नित्यं प्राप्तः । घेप्पइ गृह्यते । नान्त्यद्वित्व इति यकोऽभावः । पक्षे गेण्हिअइ गेण्हिज्जइ । यक इअइज्जाविति इअइज्जौ । सन्धावकारलोपः ॥ ६६ ॥

सुबोधिनी ।

ग्रह इत्यस्य भावकर्मणोः घेप्प इति वा स्यात् । घेप्पइ गेण्हिअइ गेण्हिज्जइ गृह्यते ॥ ६६ ॥

# क्तेन दिण्णादयः ॥ ६७ ॥

सञ्जीवनी ।

क्तेनेति तृतीयान्तम् । निपातनार्थमिदम् । डुदाञ् दाने इत्यादीनां क्तप्रत्ययेन सह दिण्ण इत्यादय आदेशा निपात्यन्ते । ये प्रत्ययलोपागमवर्णविकार-लक्षणेन अनुपपन्नाः ते निपातनात् साध्यन्ते इत्यर्थः ।

दत्तमुक्तव्यतिक्रान्तत्रस्तानामुदितस्य च ।
दिण्णं मुक्तं च वोलीणाहित्थरुण्णा भवन्त्यमी ॥
दष्टदग्धार्जितख्यातस्थापितानामिमे मताः ।
डक्कं दड्ढं विढत्तं च संखाअं थविअं तथा ॥
स्पृष्टास्वादितनष्टानां स्यात् प्रतारितलूनयोः ।
छिविअं चक्खिअं लुक्कं तथा विलविअं लुअम् ॥

आरब्धार्पितयोः स्यातां आढत्तं च विणाविअम् ।
एवं दिण्णादयोऽन्येऽपि दत्तादीनां निपातिताः ॥६७॥

सुबोधिनी ।

क्तेन प्रत्ययेन सह डुदाञ् दान इत्यादीनां धातूनां दिण्णादयो निपात्यन्ते ।

दत्तमुक्तव्यतिक्रान्तत्रस्तानामुदितस्य च ।
दिण्णं मुत्तं च वोलीणाहित्थरुण्णा भवन्त्यमी ॥
दष्टदग्धार्जितख्यातस्थापितान्त्रामिमे मताः ।
डक्कं डड्ढं विढत्तं च संखादं थाविअं तथा ॥
स्पृष्टास्वादितनष्टानां स्यात् मतारितलूनयोः ।
छिविअं चक्खिअं लुक्कं तथा विसारिअं लुअं ॥
आरब्धार्पितयोः स्यातां आढत्तं च विणाविअं ।
एवं दिण्णादयोऽन्येऽपि दत्तादीनां निपातिताः ॥६७॥

# तक्षे रंफवच्छौ ॥ ६८ ॥

सञ्जीवनी ।

तक्ष त्वक्ष तनुकरणे इत्यस्य तक्षे रंफ वच्छ इत्येतौ आदेशौ भवतः । रंफइ वच्छइ तक्षति तक्ष्णोति वा ॥६८॥

सुबोधिनी ।

तक्षेः रंपचच्छौ ॥ ६८ ॥

तक्ष त्वक्ष तनूकरणे इत्यस्य रंप चच्छ च इत्यादेशौ स्तः । रंपइ चच्छइ तक्षति तक्ष्णोति वा ॥ ६८ ॥

# खिदेर्विसूरः ॥ ६९ ॥

सञ्जीवनी ।

खिद दैन्ये इत्यस्य विसूर आदेशो भवति । विसूरइ विसूरए खिद्यते । तप्रत्ययस्य इदेतौ । लादेशे वा इति एत्वम् । अत्रापि बहुलग्रहणानुवृत्तेः खिज्जइ इत्यपि । त्यथ्यद्यां चछजा इति जः ॥ ६९ ॥

सुबोधिनी ।

खिद दैन्ये इत्यस्य विसूर इत्यादिश्यते । विसूरेइ विसूरइ खिद्यते । अत्रापि बहुलग्रहणानुवृत्तेः खिज्ज इत्यादिश्यते । तेन खिज्जइ ॥ ६९ ॥

# क्रुधेर्जूरः ॥ ७० ॥

सञ्जीवनी ।

क्रुध कोपे इत्यस्य जूर इत्यादेशः स्यात् । जूरइ क्रुध्यति । जूरन्तो क्रुध्यन् । न्तमाणावित्यादिना शतुः न्तः । लादेशे वेति एत्वम् ॥ ७० ॥

सुबोधिनी ।

क्रुधि कोपे इत्यस्य जूर इत्यादिश्यते। जूरइ क्रुध्यति ॥७०॥

# चर्चेश्चरः ॥ ७१ ॥

सञ्जीवनी ।

चर इत्येकं पदम् । चर्च अध्ययने इत्यस्य ण्यन्तस्य चर इति आदेशो भवति । चरइ चर्चयति वक्तीत्यर्थः । चरिज्जइ चर्च्यते । यक इअइज्जौ इति इअइज्जोरन्यतरः ॥ ७१ ॥

सुबोधिनी ।

चर्च अध्ययने इत्यस्य चर आदेशः स्यात् । चरइ चर्चयति वक्तीत्यर्थः ॥ ७१ ॥

# त्रसेर्वज्जः ॥ ७२ ॥

सञ्जीवनी ।

त्रसि उद्वेगे इत्यस्य वज्ज आदेशः स्यात् । वज्जइ त्रसति त्रस्यति वा ॥ ७२ ॥

सुबोधिनी ।

त्रसी उद्वेगे इत्यस्य वज्ज इत्यादेशः स्यात् । वज्जइ त्रसति त्रस्यति वा ॥ ७२ ॥

# मृजेर्लुभपुंसौ ॥ ७३ ॥

सञ्जीवनी ।

मृजूष् शुद्धौ इत्यस्य लुभपुंसौ इत्येतौ आदेशौ स्याताम् । लुभइ पुंसइ मार्ष्टि ॥ ७३ ॥

सुबोधिनी ।

मृजेर्लुहलुभौ ॥ ७३ ॥

मृजुष् शुद्धावित्यस्य लुह लुभ इत्यादेशौ स्तः । लुहइ लुभइ मार्ष्टि ॥ ७३ ॥

# बुड्डखुप्पौ मज्जेः ॥ ७४ ॥

सञ्जीवनी ।

टुमस्जो शुद्धौ इत्यस्य बुड्ड खुप्प इत्यादेशौ भवतः । बुड्डइ खुप्पइ । सर्वत्र लवरामिति रलोपस्य प्रायिकत्वात् सेवादिषु वेति डस्य द्वित्वे कृते बुड्ड इत्यादेशस्य सिद्धत्वात् बुड्ड इत्यादेशो न कर्तव्यः इत्याहुः ॥ ७४ ॥

सुबोधिनी ।

टुमस्जो शुद्धाविसस्य बुड्ड खुप्प इत्यादेशौ स्तः । बुड्डइ खुप्पइ मज्जति । ब्रुड निमज्जन इत्यस्यापि बुड्डइ इत्येव प्रयोगः ॥ ७४ ॥

# दृशेः पुलअ णिअच्छ अवक्ख सच्चवाः ॥ ७५ ॥

सञ्जीवनी ।

दृशिर् प्रेक्षणे इत्यस्य पुलअ णिअच्छ अवक्ख सच्चव इत्येते चत्वार आदेशाः स्युः । सच्चवा इति वा पाठः । तच्चिन्त्यम् । लिपेर्भ्रमः । पुलअइ पुलएइ णिअच्छइ णिअच्छेइ । अवक्खइ अवक्खेइ । सच्चवइ सच्चवेइ पश्यति । लादेशो वेत्येतत्वम् । यत्तु पलोएइ इति रूपं तत् प्रपूर्वस्य लोकृ दर्शने इत्यस्य स्वार्थे णिजन्तस्य ॥ ७५ ॥

सुबोधिनी ।

दृशिर् इत्यस्य पुलअ इत्यादेशाः स्युः । पुलएइ पुलअइ णिअक्खइ णिअक्खेइ अवक्खइ अवक्खेइ सच्चवइ सच्चवेइ पश्यति । ननु कथं पलोएइ इति रूपं ? लोकृ दर्शने इत्यस्य प्रपूर्वस्य स्वार्थे णिजन्तस्य स्यात् ॥ ७५ ॥

# शकेस्तरवअतीराः ॥ ७६ ॥

सञ्जीवनी ।

शक्लृ शक्तौ इत्यस्य तर वअ तीरा इति त्रय

आदेशाः स्युः। तरइ वअइ तीरइ शक्नोति। तरिज्जइ वइज्जइ तीरिज्जइ शक्यते। यक इअइज्जौ इति इअइज्जोरन्यतर आदेशः। सन्धावकारलोपः॥ ७६॥

सुबोधिनी।

शकेस्तरवअतीराः॥ ७६॥

शक्ऌ शक्तौ इत्यस्य तरादयः स्युः। तरइ वअइ तीरइ शक्नोति॥ ७६॥

# एवमन्येऽपि॥ ७७॥

सञ्जीवनी।

श्रुत्यनुमित्यध्याहारैर्वाक्यार्थपरिकल्पनेति। अन्येषामिति अध्याह्रियते। यथैव भू सत्तायामित्येवमादीनां होहुवादयो विहिताः एवमनेनैव प्रकारेण अन्येषामपि लवि अवस्रंसने इत्येवमादीनां धातूनां यथादर्शनमन्ये थक्क इत्येवमादय आदेशाः स्युः। थक्कइ विलम्बते। लवि अवस्रंसन इत्यस्य विशब्दोपसर्गसहितस्य क्वचिदपि विथक्कन्तो शतृडन्तः। अच्छइ आस्ते। आस उपवेशने इत्यस्य अच्छ इत्यादेशः। छुहइ क्षिपति। क्षिप प्रेरणे इत्यस्य छुह इत्यादेशः। महइ वंछइ वाञ्छति। वाञ्छ इच्छायामित्यस्य मह वंछ इत्यादेशौ। अणिअइ

आश्रयति । श्रिञ् सेवायामित्यस्य आङ्पूर्वस्य अणि इत्यादेशः । णूमेइ गोपायति । गुप् रक्षणे इत्यस्यादेः णु आदेशः । लादेशे वेति एत्वम् । जअइ जयति । जि जये इत्यस्य जअ आदेशः । ढक्कइ स्थगयति । स्थग संवरणे इति स्वार्थे णिजन्तस्य ढक्क आदेशः । पिणुवइ प्रहिणोति । हि गतौ इत्यस्य प्रपूर्वस्य पिणुव इत्यादेशः । जेंवइ इति तु भुज पालनाभ्यवहारयोरित्यस्य जेंव आदेशात् । जेमइ इत्येवं नोदाहार्यम्, चमु जमु झमु जिमु अदने इति जेमतेः अडादेशा बहुलमिति एत्वेन सिद्धत्वात् । बहुलग्रहणानुवृत्तेः क्वचित् थक्कादय आदेशाः न भवन्ति । खिवइ क्षिपति । ष्कस्कक्षां खः इति क्षस्य खः । जिणइ जयति । श्रुजीत्यादिना अन्ते णः । भावकर्मणोरपि–दीसइ दृश्यते । दृशिर् प्रेक्षणे इत्यस्य दीस आदेशः । बिढप्पइ अर्ज अर्जने इत्यस्य बिढप्प आदेशः । क्त्वाप्रत्ययेऽपि । णूमिअं गोपायितम् । क्ते इतीत्वम् पूर्ववत् तलोपः । एवं महिअं वाञ्छितम् । ढक्किअं स्थगितम् । पिणुविअं प्रहितम् । इत्यादयोऽपि यथा दर्शनम् । प्रत्ययान्तरेऽपि धात्वन्तराणामादेशा उह्याः । केचित्तु एवमन्येऽपीति सूत्रे क्रियापदमेव व्याचक्षते तन्न समीचीनम् अक्रियापदानामपि आदेशविधान-

दर्शनात् । उदाहृतं चैव-यद्येवं तर्हि अनेनैव सिद्धत्वात् अनर्थकं क्तेन दिण्णादयः इति सूत्रमिति चेत्, तत्र क्तेनेति सहार्थे तृतीया तेन क्तप्रत्ययसहितानां धातूनां तत्रादेशः अत्र केवलानामिति अस्त्येव सार्थकत्वम् ॥ ७७ ॥

सुबोधिनी ।

यथा भ्वादीनां धातूनां होहुवादयस्तथानुक्तानामपि धातूनां यथादर्शनमन्ये आदेशाः स्युः । विअविइ स्त्रंसते थक्कइ विलम्बते विस्थक्कन्तो विलंबमानः । एवं अच्छइ आस्ते । छुहइ क्षिपति । महइ वञ्छइ वाञ्छति । अल्लिअइ आश्रयति । णूमइ गोपायति । जअइ जयति । ढक्कइ स्थापयति । पिणवइ प्रहिणोति । बहुलग्रहणानुवृत्तेः क्वचित् विभाषा । थक्कइ खिवइ क्षिपति इत्यादौ । भावकर्मणोरपि-दीसइ दृश्यते आढप्पइ आरभ्यते विढप्पइ अर्ज्यते । क्त्वाप्रत्ययेपि-थक्किऊण स्थित्वा छुहिऊण छित्वा ढक्किऊण स्थगयित्वा । क्तप्रत्ययेपि-णूमिअं गोपायितं महिअं वांछितं ढक्किअं स्थगितं पिण्णविअं प्रहितं इत्यादयः । एवं प्रत्ययान्तरेष्वपि धात्वन्तराणामपि यथादर्शनमादेशा उह्याः । ननु चानेनैव सूत्रेण लब्धार्थत्वात् क्तेन दिण्णादय इति सूत्रं व्यर्थम् । मैवं तत्र क्तप्रत्ययेनैव सह आदेशविधानादत्र धातुमात्रस्यैव ॥ ७७ ॥

## शेषाणामदन्तता ॥ ७८ ॥

सञ्जीवनी।

विहितादेशेभ्यो धातुभ्योऽन्येऽकृतादेशाः शेषाः। अदन्तानां भावः अदन्तता। शेषाणां हलन्तानां धातूनां अदन्तता भवति। अकारान्तं भवतीत्यर्थः। हसेइ हसइ हसति। हसे हसने इत्यस्य अदन्तत्वे लादेशे वेत्येवं वा। हसिओ हसितः। अत्र अदन्तत्वे क्ते इति इत्वम्। हासिऊण हसित्वा। अत्रापि अदन्तत्वे सति ए च क्त्वेत्यादिना इत्वमेत्वं वा। अहअं रूसामि। रुष रुष्टौ। रुषादीनां दीर्घः इति उकारस्य दीर्घः। अदन्तत्वे सति अत आ मिपि वेति आत्वम्। लहामो लभामहे। डुलभष् संप्राप्तौ। न्तिहेत्थेत्यादिना महिङो मोमुमानामन्यतम आदेशः। अदन्तत्वे सति इच्च बहुषु इति आत्वमित्वं च। खघथादिना भस्य हः। रमु क्रीडायाम्। अत्रादन्तत्वे सति अत ए से इत्यादेशौ। इत्यादयः। क्वचिददन्तत्वे अकारान्तपाठ एव प्रयोजनम्। अदन्ततावदिति इवार्थप्रयोजनं चिन्त्यम्॥ ७८॥

सुबोधिनी।

विहितादेशेभ्यो धातुभ्योऽन्येऽकृतादेशा ये हलन्ता धातवस्तेषामदन्तता स्यात्। हसइ हसेइ हसति। एवमन्यत्रापि हलन्तधातावदन्ततायामत इत्यधिकारविहितकार्याणि द्रष्टव्यानि॥ ७८॥

# अनदन्तानामद् वा ॥ ७९ ॥

सञ्जीवनी ।

अनदन्तानां अकाररहितानां स्वराणां अकारागमो भवति । भाइ भाअइ बिभेति । ञिभी भये इत्यस्य भियो भाबिहौ इति भादेशः । अनदन्तानामिति किम् ? हुवइ ॥ ७९ ॥

सुबोधिनी ।

अकारान्तरधातूनामकारागमो वा स्यात् । भाइ भाअइ बिभेति । होइ होअइ भवति इत्यादि ॥ ७९ ॥

# अडादेशा बहुलम् ॥ ८० ॥

सञ्जीवनी ।

अट् प्रत्याहारः । अटश्च आदेशाश्चेति द्वन्द्वः । अइउण् इत्यादयः हयवरटपर्यन्ताः अटः । भुवो होहुवौ इत्यादिसूत्रप्रतिपादिताश्च धातूनां ये आदेशाः ते बहुलं अनेकप्रकारा भवन्ति । तथा चोक्तं—

क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः
क्वचिद् विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य
चतुर्विधं बाहुलकं वदन्ति ।

अटस्तावत्—धोवइ धावति । धाव गतिशुद्ध्योः ।

ततिपोरि देताविति इत्वम् । अत्राकारस्य ओत्वम् । सोवइ सुवइ स्वपिति । ञिष्वप् शयने । सर्वत्र लवरामिति वलोपः । अकारस्य उकारः । पो वः इति पस्य वः । पूर्ववत् अन्यत् । एइ एति । इण् गतौ । अत्रेकारस्य एत्वम् । देइ ददाति । डुदाञ् दाने । आकारस्य एत्वम् । णेइ नयति । णीञ् प्रापणे इति इकारस्य एत्वम् । रोवइ रुवइ रोदिति । रुदिर् अश्रुविमोचने इति उकारस्य वा ओत्वम् । णासइ नश्यति । णश अदर्शने अस्यात्वम् । शषोः स इति शस्य सः ।

अथादेशाः–स्मरते भरसुमरौ इति यदुक्तं तत् विकल्प्यते तेन पक्षे सर इत्येव भवति । अन्ते अरः इति ऋकारस्य अरादेशः । अधो मनयामिति मस्य लोपः । बुड्डखुप्पौ मस्जेरित्यपि विकल्प्यते । तिप्प्रत्यये मज्जइ मज्जति । उपरि लोप इत्यादिना सलोपः । शेषादेशादिना जस्य द्वित्वम् । तक्षे रंपवच्छौ इत्यपि विकल्प्यते । तेन तच्छइ तक्ष्णोति । अक्ष्यादिषु क्षः इति क्षस्य छः । तस्य शेषादेशादिना द्वित्वे वर्गे युजः पूर्वः इति चः । शकेस्तरवअतीराः इत्यपि शकादीनां द्वित्वमिति पाक्षिकं भवतीति । सक्कइ शक्नोति । घूर्णेर्घोलघुम्मौ च्छियो झिज्ज इत्यादयः द्रष्टव्याः ।

क्वचिदन्यदेव–ठाझागाश्च भविष्यद्वर्तमानविध्या-

थेकवचन इत्यत्र उक्तेभ्यः प्रत्ययेभ्यः अन्यत्रापि ठाझा-गा इत्यादेशाः प्रवर्तन्ते । तेन ठाऊण स्थित्वा । झाऊण ध्यात्वा । गाऊण गात्वा । ढाउं स्थातुं । झाउं ध्यातुम् । गाउं गातुम् । ठाअव्वं स्थातव्यम् । झाअव्वं ध्यातव्यम् । गाअव्वं गातव्यम् । पूर्वत्रापि सूत्रादन्यत्र यत् प्रतिपादितं किमपि तत् बहुलग्रहणादेवेति मन्तव्यम् ॥८०॥

इति प्राकृतसञ्जीवन्यां धातुविधिः सप्तमः परिच्छेदः ।



सुबोधिनी ।

अटश्च आदेशाश्चेति द्वंद्वः । अट इति प्रत्याहारः । धातूनामट आदेशाश्च बहुलं ज्ञेयाः । बहुलग्रहणात् क्वचित्प्रवृत्तिरिति आभिप्रैति । अटस्तावत्—धुवइ धावइ । सुवइ सोवइ स्वपिति । एइ एति । देइ ददाति । णेइ नयति । रोवइ रुवइ रोदिति । णासइ नश्यति । अथादेशाः—सरइ स्मरति । मज्जइ मज्जति । तच्छइ तक्ष्णोति । सक्कइ शक्नोति । इत्यादयोऽन्येऽपि विकल्पिता द्रष्टव्याः । क्वचिदन्यदेव । ठाऊण स्थित्वा । झाऊण ध्यात्वा । गाऊण गात्वा । ठाउं स्थातुं । गाउं गातुं । झाउं ध्यातुं । ठाअव्वं झाअव्वं गाअव्वं स्थातव्यं ध्यातव्यं गातव्यं इत्यादौ क्त्वप्रत्ययादन्यत्रापि ठाझागा । एवमन्यदपि लक्ष्यानुसारेण बहुलग्रहणादुह्यम् ॥ ८० ॥

वृत्तौ प्राकृतसूत्राणां श्रीसदानन्दनिर्मितौ ॥
परिच्छेदःसुबोधिन्यां धातुविध्याख्यसप्तमः ।



# अथाष्टमः परिच्छेदः ।



## अथ निपातविधिरुच्यते ।

## निपाताः ॥ १ ॥

सञ्जीवनी ।

अधिकारोयम् । इत ऊर्द्ध्वं यदनुक्रमिष्यामस्ते शब्दा निपातसंज्ञकाः अव्ययनामानो भवन्तीति अधिकृतं वेदितव्यम् । आ परिच्छेदपरिसमाप्तेरय-मधिकारः ।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥
इति विशेषः प्रातिपदिकेभ्यो निपातानाम् ॥ १ ॥

सुबोधिनी ।

अतः परं ये विधास्यन्ते ते शब्दा निपातसंज्ञा स्युः अव्ययनामानो भवतीत्यधिकृतं वेदितव्यम् ॥ १ ॥

# कीस किमर्थे ॥ २ ॥

सञ्जीवनी ।

कीस इत्ययं निपातः । किमो योऽर्थस्तत्र वर्तते । कीस तुए मह कहिअं किं त्वया मम कथितम् । अत्र कीसशब्दः किमोऽर्थे वक्ति ॥ २ ॥

सुबोधिनी ।

किम्शब्दस्यार्थे कीस इति निपातः स्यात् । कीस तए मह कहिअं किं त्वया मम कथितं ॥ २ ॥

# हुं दानपृच्छानिवारणेषु ॥ ३ ॥

सञ्जीवनी ।

दाने पृच्छायां निवारणे हुमिति निपातो वर्तते । हुं देअर गेण्हसु हु देवर गृहाण । अत्र हुंशब्दो दानार्थं द्योतयति । हुं भण हु भण इत्यत्र पृच्छां द्योतयति । हुं होसु तुण्हिक्को हु भव तूष्णीकः । अत्र प्रतिषेधार्थं द्योतयति । अस्तोऽपि निपाताः क्वचिद् वाचकाः क्वचिद् द्योतका इति यथादर्शनमवगन्तव्यम् ॥ ३ ॥

सुबोधिनी ।

दाने प्रश्ने निवारणे चार्थे हुं इति निपातः स्यात् । हुं देअर गेण्ह हे देवर गृहाणेत्यत्र हुं शब्दो दानं द्योतयति । हुं होसु तुण्हिक्को भव तूष्णीकः । अत्र निवारणम् । निपाताः क्वचित् द्योतकाः क्वचिद्वाचका इति यथादर्शनमवगंतव्यम् ॥ ३ ॥

## च्चिअ च्चेअ अवधारणे ॥ ४ ॥

सञ्जीवनी ।

इत्येतौ निपातावधारणार्थे वर्तेते । एसो च्चिअ स राआ । एष एव स राजा इति निश्चयः । स च्चेअ इअं णअरी । सैवेयं नगरी । अन्या न भवतीत्येवं प्रायो निश्चयः । सेवादिषु वेति चस्य द्वित्वमवधारणार्थस्य वाचकत्वात् ॥ ४ ॥

सुबोधिनी ।

अस्मिन्नर्थे च्चिअ च्चेअ निपातौ भवतः । सच्चिअ सच्चेअ सैव ॥ ४ ॥

## ओ सूचनापश्चात्ताप-विकल्पेषु ॥ ५ ॥

सञ्जीवनी ।

सूचना साभिप्रायमुद्देशकथनम् । पश्चात्तापो-ऽनुशयः । विकल्पः पाक्षिको विधिः । एषु त्रिष्वर्थेषु ओ इति निपातो वर्तते । ओ अविणअ तत्तिला । तत्तिणणा इति वात्र पाठः । अविनययत्नवती । अत्र ओशब्दः पूर्वकृतस्वकीयाकरणीयासूचकत्वं द्योतयति । ओ अणुणेमि अथ अनुनयामि । अत्र विकल्पार्थ ओशब्दः ॥ ५ ॥

सुबोधिनी ।

सूचना साभिप्रायमुपकथनम्, पश्चात्तापोऽनुशयः, विकल्पः पाक्षिको विधिः, एष्वर्थेषु ओ निपातः स्यात् । ओ अविणअ जतणिला अविनययत्नवती । अत्र ओशब्दः स्वकीयाकरणीय-सूचकत्वं द्योतयति । ओ ण पसण्ण म्हि न प्रसन्नास्मि । अत्र ओशब्दः किमित्यहं न प्रसन्ना इति पश्चात्तापं द्योतयति । ओ अणुणेमि अथ अनुनयामि । अत्र विकल्पार्थ ओशब्दः ॥५॥

# इरकिरकिला अनिश्चयाख्यानेषु ॥ ६ ॥

सञ्जीवनी ।

इरकिरकिलनिपाताः अनिश्चय आख्याने अस-

म्यगर्थप्रतिपादने वर्तन्ते । इह इर दिट्ठो दइओ इह किल दृष्टो दयितः । अत्र इरशब्दः स्थानदर्शनादेव निश्चितार्थं वक्ति । एण्ह किरालिंगिओ एतस्मिन् किलालिङ्गितः । अत्रापि स्थानस्थस्य आलिंगनस्य किरशब्दः असम्यगर्थतां कथयति । ण किल रमिओ न किल रमितः । अत्र किलशब्दो रमिताप्रतिषेधस्य अपरिस्फुरतां कथयति ॥ ६ ॥

सुबोधिनी ।

अनिश्चयेऽसम्यगर्थप्रतिपादने इरादयो निपाताः स्युः । इह इर दिट्ठो दइओ । अत्र किरशब्दः स्थानदर्शनादेव निश्चितार्थं वक्ति । एत्थ किरालिंगिओ अत्र किलालिंगितः । अत्र किरशब्दः स्थानस्थालिंगनस्यासम्यगर्थतां द्योतयति । ण किर रमिओ न किल रमितः । अत्र किलशब्दो रमितार्थप्रतिषेधस्यापरिस्फुरतां कथयति ॥ ६ ॥

## हु क्खु निश्चयवितर्कसम्भावनासु ॥ ७ ॥

सञ्जीवनी ।

निश्चयो नियमः । वितर्को विमर्शः । अध्य-

वसायः सम्भावनेत्यस्यार्थः। एषु त्रिषु अर्थेषु हु क्खु निपातौ वर्तेते। अज्ज हु दीसइ दइआ। अद्य खलु दृश्यते दयिता। अत्र हुशब्दो निश्चयं कथयति। अज्ज क्खु एसा मं पलोएइ अद्य खलु एषा मां प्रलोकयति। ण हु दिट्ठो तइ अज्जावि। न खलु दृष्टस्त्वया अद्यापि। अत्र हुशब्दो दर्शनवितर्कं द्योतयति। पेच्छ क्खु दारम्मि सो कदावि थिओ होइ। प्रेक्षस्व खलु द्वारे स कदापि स्थितो भविष्यति। अत्र क्खुशब्दो द्वारदेशस्थितिविमर्शोत्पत्तिद्योतकः। अच्छउ ताव हु णइए। आस्तां तावत् खलु नद्याः। अत्र हुशब्दो नदीपारगमनातिक्रमसम्भावनां द्योतयति। खणा क्खु वच्चामि जलनिहिणो पारं। अत्र क्खुशब्दः सागरपारतीरप्राप्त्यध्यवसायद्योतनार्थः॥८॥

सुबोधिनी।

निश्चयादिष्वर्थेषु हु क्खु इति निपातौ स्तः। अज्ज हु दीसइ दइआ अज्ज क्खु दीसइ दइआ अद्य खलु दृश्यते दीयता। अर्थनिश्चयार्थः। ण हु दिठ्ठो तइ अज्जवि न खलु दृष्टस्त्वयाद्यापि। पेच्छसु क्खु दारम्मि स्स ठिओ होज्ज प्रेक्षस्व खलु द्वारे स्थितो भविष्यति। अत्र वितर्कः। अच्छउ ताव हु णइए आस्तां तावत् खलु नद्याः। अत्र नदीपारगमनातिक्रमाध्यवसायरूपां संभावनां यथायथं हु क्खुशब्दौ प्रकाशयतः॥७॥

# इजेराः पादपूरणे ॥ ८ ॥

सञ्जीवनी ।

इ जे र इत्येते निपाताः पादपूरणे वर्तन्ते । न्यूनपादपूरणमेव एषां प्रयोजनमित्यर्थः । एस इ तहा पअट्टो । एष तथा प्रवृत्तः । अत्र इकारः पादमध्यस्थानप्रदेशपूरणार्थः । अन्यथा वृत्तभंगः स्यात् । लंभइ जे पेखिउं । लभ्यते प्रेक्षितुम् । अत्र जेकारः पादपूरणाय । ण र तए वि । त्वयापि । अत्र रेफः पूरणार्थः ॥ ८ ॥

सुबोधिनी ।

इजेरा पादपूरणामात्रार्थनिपाताः स्युः । एस इ तहा पअट्टो एषतथा प्रवृत्तः । अत्र इ । लंभइ जे पेक्खिउं लभ्यते प्रेक्षितुं । अत्र जेशब्दः ॥ ८ ॥

वृत्तौ प्राकृतसूत्राणां श्रीसदानन्दनिर्मितौ ।
परिच्छेदः सुबोधिन्यां निपातविधिरष्टमः ॥

श्रीसंवत् १७८९ समये आषाढशुक्लाष्टम्यां सोमे
रघुनाथेन लिखितेयम् ।



# आनन्तर्ये णवरि ॥ ९ ॥

सञ्जीवनी ।

अनन्तरस्य भावः आनन्तर्यम् । णवरि इत्ययं निपातः आनन्तर्येऽर्थे वर्तते । णवरि छिण्णं सीसं रणे रिउणो । अनन्तरं छिन्नं शीर्षं रणे रिपोः । अत्र णवरिशब्देन शीर्षच्छेदनस्य आनन्तर्यमुद्योतितम् । केचित्तु णवरि केवलानन्तर्ययोरित्येकं सूत्रं पठन्ति तन्मते निपातद्वयमपि उभयनिवृत्तौ पर्यवस्यति ॥ ९ ॥

# उ क्षेपविस्मयसूचनासु ॥ १० ॥

सञ्जीवनी ।

क्षेपः तिरस्कारः, विस्मय आश्चर्यम्, सूचना अभिप्रायपैशुन्यम्, एषु त्रिष्वर्थेषु उ इति निपातो वर्तते । उ अम्ह ण तेण कज्जं । नास्माकं तेन कार्य्यम् । प्रयोजनेऽपि प्रयोजनं नास्तीति अधिक्षेपः । तं उकारो द्योतयति । उ सो एस इह कुदो आअदो । स एष कस्मात् आगतः इत्यादि यदाश्चर्यं तत् उ इत्यनेन द्योत्यते । सहि उ विलक्खो व्व सखि विलक्ष इव । अत्र वैलक्ष्यजननकारणाभिप्रायद्योतनार्थं उशब्दः ॥ १० ॥

# क्किणो प्रश्ने ॥ ११ ॥

सञ्जीवनी ।

क्किणो इति निपातः प्रश्नेऽर्थे वर्तते । सुअह क्किणो कहासि मं । सुभग किं कथयसि माम् । अत्र क्किणो इति प्रश्नार्थवाचकः । कीस किमर्थे क्किणो प्रश्ने इत्यनयोः अर्थभेदेऽर्थभेदो न कर्तव्यः । तथा चोक्तं 'सम्भवत्येकवाच्यत्वे वाक्ये भेदस्य नेष्यते' ॥ ११ ॥

# अव्वो दुःखसूचना-सम्भाषणेषु ॥ १२ ॥

सञ्जीवनी ।

दुःखे सूचनायां सम्भाषणे चार्थे अव्वो इति निपातो वर्तते । अव्वो मह पियविरहो । मम प्रियविरह इत्यत्र अव्वो विरहक्षतदुःखा-वेदकः । सहि एस णिट्ठुरो अव्वो । सखि एष निष्ठुरः । अत्र अव्वो शब्दः सख्या सह यः संभाषः तदर्थद्योतनद्वारेण प्रयुक्तः । अव्वो इति निपातः आश्चर्यदर्शने क्वापि दृश्यते । अव्वो

वल्लह किमिणम् । आश्चर्यं वल्लभ किमिदम् ? ।
अत्राश्चर्यद्योतनार्थोऽयं अव्वोशब्दनिपातः ॥ १२ ॥

# अलाहि निवारणे ॥ १३ ॥

सञ्जीवनी ।

अलाहि इति त्र्यक्षरो निपातो निवारणे प्रतिषेधेऽर्थे वर्तते । अलाहि तुम्हे अम्ह णामेण अलं तव अस्मदीयनाम्ना । अन्यः कश्चिन्नामग्रहणात् अलाहि इत्यनेन प्रतिषिध्यते ॥ १३ ॥

# अइ रणे संभाषणे ॥ १४ ॥

सञ्जीवनी ।

अइ रणे इत्येतौ संभाषणे निरूपणेऽर्थे वर्तते । अइ पिअअम छणं दिअहो अयि प्रियतम क्षणं दिवसः । अत्र क्षणमर्थं संभावयन् अइ शब्दः संभाषितः । अज्ज रणे नाह गम्मइ घराउ अद्य गम्यते नाथ गृहात् । अत्र रणेशब्दः गमनस्य सम्भाषणं निरूपयति ॥ १४ ॥

# वेव्व आमंत्रणे ॥ १५ ॥

सञ्जीवनी ।

आह्वानं आमन्त्रणम् । वेव्व इत्ययं त्र्यक्षरो निपातः आमन्त्रणेऽर्थे वर्तते । वेव्व देअर जाणसु हे देवर जानीहि । वेव्वशब्दः आमन्त्रणार्थं द्योतयति । देश्यां पुनरयं अनेकार्थो दृश्यते । यथा—'वेव्ववे-व्विलिओ स्यातां वारणे तूरणे तथा' ॥ १५ ॥

## थू कुत्सायाम् ॥ १६ ॥

सञ्जीवनी ।

थू इति निपातः कुत्सायामर्थे वर्तते । कुत्सा निन्दा । थू तुह सवत्तिचरिअं । धिक् तव सपत्नीचरितम् । अत्र थूशब्दात् सपत्नीचरितस्य निन्दा प्रतीयते ॥ १६ ॥

## रे अरे हरे संभाषणरतिकलहक्षेपेषु ॥ १७ ॥

सञ्जीवनी ।

संभाषणं संकथनम्, रतिकलहो निधुवनकेलिः, क्षेपः तिरस्कारः, एष्वर्थेषु यथासंख्यं रे अरे हरे

अथो निपाता वर्तन्ते । णिसुअं जं रे जंपासि । निश्रुतं यत् रे जल्पासि । अत्र रेशब्दः संभाषणद्योतनकरः । देहि अरे णिवसणं देहि अरे निवसनम् । अत्र अरेशब्दः प्रार्थनाभिप्रायरतिकलहद्योतकतामावहति । हरे धट्ठो अहो धृष्टः । अत्र हरे शब्दः धृष्टत्वलक्षणमधिक्षेपं समुन्मीलयति ॥ १७ ॥

# पिव मिव विव व इवार्थे ॥ १८ ॥

सञ्जीवनी ।

पिव मिव विव व इत्येते चत्वारः शब्दा निपाताः इवार्थे उपमानोत्प्रेक्षादौ वर्तन्ते । रंभापिव रूपेण रंभेव रूपेण । हरिणीमिव तरलपेच्छिएण हरिणीव तरलप्रेक्षितेन । हंसीविव गमणेण । हंसीव गमनेन । सीअव्व सईत्तणेण तुमं । सीतेव सतीत्वेन त्वम् । सेवादिषु वेति वस्य द्वित्वम् ।

एवमादयोऽन्येनिपाता भवन्ति ।

तथा च ।

अनारम्भे च क्षेपे च पश्चात्तापविषादयोः ।
निश्चये च बुधैः प्रोक्तो निपातो हन्त इत्ययम् ॥
हन्त वाच्यविभूषायां हे इत्यामन्त्रणे भवेत् ।
आशब्दोऽपि भवत्यर्थे नाम इत्येवमर्थकः ॥

हञ्जे हतो हले इत्यादयः संबोधने मताः ।
इवार्थे ण इति क्वापि हा खेदानुपतापयोः ॥
अलं अलं विषादार्थौ अप्यर्थोऽपि इ इत्ययम् ।
..........पूशब्दः प्रोक्तः चेतरथासमः ॥

एवं चवादयोऽर्थानातिक्रमेण अव्ययत्वेनैव अवगन्तव्याः ।

च वा हहे अहो हंहो णमे आहो हही सिहो
अविमो मुत्तु अहहो इत्याद्यास्तुचवादयः ॥१८॥

# शेषाः संस्कृतात् ॥ १६ ॥

सञ्जीवनी ।

संस्कृतात् । उक्तेभ्योऽन्ये शेषाः । सुप्तिङ्कृतद्धितसमासप्रत्याहारकारकलिङ्गसंख्यादयोऽत्र नोक्तास्ते संस्कृतात् समीक्ष्यावगन्तव्याः । उक्तं च प्राकृतं संस्कृतयोनीति । प्रकृतेः संस्कृतात् आगतं प्राकृतम् । संस्कृतं तु शाकटायनचन्द्रपाणिनिशर्ववर्माचार्यप्रणीतं शाब्दिकलोकप्रसिद्धम् । क्वचिच्च उक्तलक्षणमपि बाधित्वा एकदेशसंस्कृतायामुपपाद्य व्याक्रियते । वच्चन्ते पियम्मि भणिअं व्रजति प्रिये भणितम् । व्रज गतौ इत्यस्मात् न्तमाणाविरित्यादिना शतुः न्त इत्यादेशे कृते ङेरम्मीति ङेरत्वे कृते क्वाचिदपि लोप इत्यकारलोपे वच्चन्ते पियम्मि इति

सिज्झन्ति । एवं वच्चइ पियम्मि इत्यपि सिज्झन्ति । तथा शिरस इत्यस्य तृतीयैकवचने परे अन्त्यस्य हल इति सलोपः । टामोर्णः इति टाप्रत्ययस्य णः । ए सुप्याङ्ङसोरिति एत्वम् । एवं शिरेण इत्येवं प्राप्नोति । संस्कृतमनु सिरसेत्यस्य तृतीया । सिद्धस्याङ्गीकृतत्वात् शषोः स इति शस्य सत्वे कृते सिरसा इत्यपि भवति । तथा भगवत्त इत्यस्य आल्लिलादिना मत्वर्थे वत्त प्रत्ययः । ततः पूर्ववत् टाप्रत्ययस्य णत्वं अकारस्य च एत्वम् । एवं कृते भअवत्तेण इत्येतत् स्यात् । संस्कृतसमीक्षया तु भगवता । तृतीया सिद्धस्याङ्गीकृतत्वात् कगचादिना गवयोर्लोपः । ऋत्वादिषु तो द इति तस्य दः । दकृते भअअदा इति रूपं निष्पाद्यते । तथा किम्परस्य सप्तम्येकवचनस्य आहे इआ काले इति आहे इआ इत्यादेशौ । किमः कः इति कः । एवं कृते काहे कइआ इत्येतावेव सिज्झतः । संस्कृतसमीक्षया पुनः कदा इत्यस्याङ्गीकारात् कगचादिना दलोपे कआ इत्यपि स्यात् । इत्यादयो महाकविप्रयुज्यमानप्रयोगानुसारेण अवगन्तव्याः ॥ १९ ॥

इति वसन्तराजविरचितायां प्राकृतसञ्जीवनीवृत्तौ निपातविधिरष्टमः परिच्छेदः । समासः ।

# सूत्राणां वर्णानुक्रमसूची ।

# LIST OF SUTRAS ALPHABETICALLY ARRANGED

## अ

॥ इति ॥



# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvalī Bhāskara, a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra.

Ed. with Introduction and Index by Gopinath Kaviraj, M.A. Rs. 1–12

No. 2—The Advaita Chintāmaṇi, by Raṅgoji Bhaṭṭa, Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1–12

No. 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvatī.

Edited with Introduction etc. by Rāmājña Pāṇḍeya Vyākaraṇāchārya. Rs. 1–12

No. 4—The Kusumāñjali Bodhanī, a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja.

Ed. with Introduction etc. by Gopinath Kaviraj, M.A. Rs. 2–0

No. 5—The Rasasāra, a Commentary on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.

Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1–4

No. 6—(Part I)—The Bhāvanā Viveka by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.

Ed. with Introduction etc. by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0–12

No. 6—(Part II)—Ditto Ditto Rs. 0–12

No. 7—(Part I)—Yoginīhṛdaya dīpikā, by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeś-vara Tantra.

Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1–4

No. 7—(Part II) Ditto Rs. 1–8

No. 8—The Kāvyaḍākinī, by Gaṅgānanda Kavīndra.

Ed. with Introduction etc. by Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0–10–6

No. 9—(Part 1)–The Bhakti Chandrikā,a Commentary on S'āṇḍilya's Bhaktisūtras, by Nārāyaṇa Tīrtha.
Ed.with a PrefatoryNote by Gopinath Kaviraj,M.A.
Rs. 0–15

No. 10–(Part I)–The Siddhāntaratna, by Baladeva Vidyābhūsaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.Rs.1–2

No. 10–(Part–II)–The Siddhāntaratna by Baladeva Vidyābhūṣaṇa.
Ed. with Introduction by Gopinath Kaviraj, M. A.

No. 11–The S'rī Vidyā Ratna Sūtras, by Gaudapāda, with a Commentary by Saṅkarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste Sāhityāchārya. Rs. 0–9

No. 12–The Rasapradīpa, by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1–2

No. 13–The Siddhasiddhānta Saṅgraha, by Balabhadra.
Ed, with Introduction by Gopinath Kaviraj, M. A. Rs. 0–14

No. 14–The Triveṇikā, by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0–14

No. 15–(Part 1)–The Tripurārahasya. ( Jñāna Khaṇḍa)
Ed.with a Prefatory Note by Gopinath Kaviraj,M.A.
Rs.0–14

No. 15–( Part–II )–The Tripurārahasya ( Jñānakhanda ) Ed. by Gopinath Kaviraj, M. A.

No. 16–The Kāvya Vilāsa, by Chirañjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 1–2

No. 17–The Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed. with Introduction by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0–14

No. 18–(Part I)–The Gorakṣa siddhānta Saṅgraha.

Ed. with a Prefatory Note by Gopinath Kaviraj. M. A. Rs. 0–14

No. 19–( Part. I )–The Prākṛita Prakāśa by Vararuchi with the Prākṛita Sañjīvanī by Vasantarāja and the Subodhinī by Sadānanda.

Ed. with Prefatory note etc. by Batuk Nath Sarmā, M. A. and Baladeva Upādhyāya, M. A.

No. 19–( Part. II ) Ditto Ditto

THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M.A.

Vol. I—

(a) Studies in Hindu Law (1): its evolution, by Gaṅgānātha

(b) The View-point of Nyāya Vaiśeṣika Philosophy, by Gopinath Kaviraj.

(c) Nirmāṇa Kāya, by Gopinath Kaviraj. Rs. 5

Vol. II—

(a) Paraśurāma Miśra ALIAS Vāṇī Rasāla Rāya, by Gopinath Kaviraj.

(b) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(c) Studies in Hindu Law (2):—its sources, by Gaṅgānāth Jha.

(d) A New Bhakti Sūtra, by Gopinath Kaviraj.

(e) The System of Chakras according to Gorakṣa nātha, by Gopinath Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka nātha S'armā.

(h) A Seventeenth Century Astrolabe, by Padmākara Dvivedi.

(i) ome aspects of Vīra S'aiva Philosophy, by Gopinath Kaviraj

(j) Nyāya Kusumāñjali (English Translation), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Nārāyaṇā S'āstri Khiste.

(l) Sondala Upādhyāya, by Gopinath Kaviraj. Rs. 5

Vol. III—

(a) Index to S'abara's Bhāṣya, by the late Col. G.A.Jacob.

(b) Studies in Hindu Law (3) Judicial Procedure: by Gaṅgā natha Jha.

(c) Theism Ancient India, by Gopinath Kaviraj.

(d) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(e) Naiṣadha and S'rī Harṣa by Nīlakamala Bhaṭṭāchārya.

(f) Indian Dramaturgy, by P. N. Pātankar. Rs. 5

Vol. IV—

(a) Studies in Hindu Law (4): Judicial Procedure: by Gaṅgā nātha Jhā.

(b) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(c) Analysis of the Contents of the Ṛgveda Prātiśākhya, by Maṅgala Deva S'āstrī.

(d) Nārāyaṇa's Gaṇita kaumudī, by Padmākara Dvivedi.

(e) Food and Drink in the Rāmāyanic Age, by Manmatha nātha Roy

(f) Satkāryavāda: Causality in Sāṅkhya, by Gopinath Kaviraj,

(g) Discipline by Consequences, by G. L. Sinha.

(h) History of the origin and expansion of the Aryans by A. C. Ganguly.

(i) Punishments in Ancient Indian Schools by G.L. Sinha. Rs. 5

Vol. V—

(a) Ancient Home of the Aryans and their migration to India, by A. C. Ganguly.

(b) A Satrap Coin, by Shyamalal Mehr.

(c) An Estimate of the Civilisation of the Vānaras as deipicted in the Rāmāyaṇa, by Manmatha nātha Roy.

(d) A Comparison of the Contents of Ṛgveda, Vājasaneya, Taittirīya & Atharvaveda Prātiśākhyas, by Maṅgala Deva Sāstri.

(e) Formal Training and the Ancient Indian Thought, by G.I. Sinha.

(f) History and Bibliography of Nyāya Vais'esika Literature, by Gopinath Kavirāj.

Vol. VI—( In progress)

(a) Index to S'abara's Bhāsya, by the late Col. G. A. Jacob..

(b) Some Aspects of the History and Doctrines of the Nāthas, by Gopinath Kaviraj.

To be had of

The Superintendent, Government Press,

ALLAHABAD, U. P. (INDIA).